**तां जातरूपप्रतिमां विशुद्धां सजातवेदस्यधिगत्य सीताम् ।**
**अभिष्टुतो दाशरथिप्रहृष्टैर्देवैरयोध्यां प्रययौ कृतार्थः ।।६०।।**

**तामिति** । कृतार्थः साधितप्रयोजनः अत एव प्रहृष्टैः देवैः अभिष्टुतः सः दाशरथिः जातरूपस्य स्वर्णस्य प्रतिमां सदृशीं जातवेदस्यग्नौ विशुद्धां तां सीतां अधिगत्य प्राप्य अयोध्यां प्रययौ ।

ರಾಮನು ತನ್ನ ಕಾರ್ಯವನ್ನು ಸಾಧಿಸಿಕೊಂಡ. ಇದರಿಂದ ಸಂತುಷ್ಟ–ರಾದ ದೇವತೆಗಳು ರಾಮನನ್ನು ಸ್ತೋತ್ರಮಾಡಿದರು. ರಾಮಚಂದ್ರನು ಬಂಗಾರದಂತಿರುವ, ಅಗ್ನಿಯಲ್ಲಿ ವಿಶುದ್ಧಳಾದ ಸೀತೆಯನ್ನು ಹೊಂದಿ ಅಯೋಧ್ಯಯನ್ನು ಕುರಿತುಹೊದನು.

**संप्रार्थ्यमानो भरतेन भक्त्या वसिष्ठमुख्यैरभिषिच्यमानः ।**
**सौमित्रिणा भूसुतया च पूर्णः साम्राज्यलक्ष्मीं समियाय रामः ।।**

**संप्रार्थ्येति** । सौमित्रिणा लक्ष्मणेन भूसुतया सीतया च पूर्णः भरतेन भक्त्या संप्रार्थ्यमानः राज्यायेति शेषः । वसिष्ठमुख्यैः मुनिभिः अभिषिच्यमानः रामः साम्राज्यलक्ष्मीं समियाय संप्राप्तः ।।६१।।

ಭರತನು ಭಕ್ತಿಯಿಂದ ರಾಜ್ಯಭಾರವನ್ನು ಮಾಡಲು ಪ್ರಾರ್ಥಿಸಿದನು. ಲಕ್ಷ್ಮಣಸೀತೆಯರಿಂದ ಪೂರ್ಣನಾದ ರಾಮಚಂದ್ರನು ವಸಿಷ್ಠಮುಖ್ಯರಾದ ಮುನಿಗಳಿಂದ ಅಭಿಷಿಕ್ತನಾಗಿ, ಸಾಮ್ರಾಜ್ಯಲಕ್ಷ್ಮಿಯನ್ನು ಹೊಂದಿದನು.

**अशेषकल्याणगुणाकरेण रामेण शश्वत् परिपाल्यमानाः ।**
**देवा मनुष्या मुनयश्च सिद्धाः ननन्दुरानन्दथुसिन्धुमग्नाः ।।६२।।**

अशेषेति । अशेषाणां कल्याणगुणानां आकरेण आश्रयेण रामेण शश्वत् पुनः पुनः मुहुः मुहुः । "पुनःपुनः शश्वदि"त्यमरः । परिपाल्यमानाः देवाः मनुष्याः मुनयश्च सिद्धाः सिद्धिमन्तः आनन्दथुसिन्धौ आनन्दसागरे मग्नाः सन्तः । "स्यादानन्दथुरानन्द" इत्यमरः । ननन्दुः समृद्धाः बभूवुरित्यर्थः ।

ರಾಮ ಅಶೇಷ ಕಲ್ಯಾಣಗುಣಗಳಿಗೆ ಆಶ್ರಯ. ಆತನು ರಕ್ಷಿಸುತ್ತಿರಲು ದೇವತೆಗಳು ಮನುಷ್ಯರು ಮುನಿಗಳು ಸಿದ್ಧರು ಆನಂದಸಾಗರದಲ್ಲಿ ವಿಹರಿಸಿದರು.

**स राजसूयप्रमुखैर्मखेन्द्रैरिष्ट्वा द्विजत्राकृतसर्वसंपत् ।**
**ददावभिष्टं सुहृदाप्तबन्धुवयस्यवागीशवनीयकेभ्यः ।।६३।।**

**स इति** । द्विजत्राकृताः ब्राह्मणाधीनीकृताः सर्वसम्पदो यस्य स तथोक्तः । द्विजत्राकृतेत्यत्र तदधीनवचने वेत्यनुवृत्तेः(५.४.५४) । देये त्राचेति(५.४.५५) त्राप्रत्ययः । स रामः राजसूयप्रमुखैः मखेन्द्रैः यज्ञश्रेष्ठैः । "राजाराजसूयेन यजेतेति श्रुतेः" । इष्ट्वा यजनं कृत्वा। सुहृदः सखायः आप्ताः विश्वसनीयाः बान्धवाः ज्ञातयः वयस्याः स्निग्धाः वागीशाः वाक्पतयः वनीयका याचकाश्चेतेभ्यः अभिष्टं ददौ।

ಎಲ್ಲ ಸಂಪತ್ತನ್ನು ಬ್ರಾಹ್ಮಣರಿಗೆ ಒಪ್ಪಿಸಿದ ರಾಮಚಂದ್ರನು ರಾಜಸೂಯ ಮುಂತಾದ ಯಾಗಗಳನ್ನು ಮಾಡಿ ಗೆಳೆಯರು, ವಿಶ್ವಾಸಿಗರು, ಬಂಧುಗಳು, ಅಭಿಮಾನಿಗಳು, ವಾಕ್ಪತಿಗಳು ಮತ್ತು ಯಾಚಕರಿಗೆ ಯಥೇಚ್ಛ ಧನವನ್ನು ಅಭಿಷ್ಟವನ್ನು ಕೊಟ್ಟನು.

**सुग्रीवरक्षोधिपयोः स राज्यमालिङ्गनं मारुतये च दत्वा ।**
**विप्राय सख्ये रघुनाथसंज्ञमर्चामयं वित्तमदात् कुलीनम् ।।६४।।**

सुहृदादिभ्यो दत्तमेव विवृणोति । **सुग्रीवेति** । स रामः सुग्रीवश्च रक्षोधिपो विभीषणश्च तयोः राज्यं कपिराज्यं राक्षसराज्यं च, मारुतये हनुमते आलिङ्गनं च दत्वा सख्ये विप्राय कुलीनं कुलागतं रघुनाथसंज्ञं अर्चामयं प्रतिमारूपं वित्तमदात् ।

ರಾಮಚಂದ್ರನು ಸುಗ್ರೀವನಿಗೆ ಕಪಿರಾಜ್ಯವನ್ನು ವಿಭೀಷಣನಿಗೆ ರಾಕ್ಷಸ–ರಾಜ್ಯವನ್ನು ಆಂಜನೇಯನಿಗೆ ಆಲಿಂಗನವನ್ನು ಕೊಟ್ಟು. ತನ್ನ ಗೆಳೆಯನಾದ ಬ್ರಾಹ್ಮಣನಿಗೆ (ವೇದಗರ್ಭಾಚಾರ್ಯ) ಕುಲಪರಂಪರಾಗತವಾದ ಮೂಲರಾಮದೇವರ ಪ್ರತಿಮೆಯನ್ನು ಕೊಟ್ಟನು.

**एवं स रामो मनुजावतारं मनुष्यलीलाऽविदितप्रभावम् ।**
**विधाय वेधप्रमुखैः सुधाशैः विज्ञापितो गन्तुमियेष धाम ।।६५।।**

**एवमिति**। स रामः एवं मनुष्यलीलाभिः अविदितप्रभावं मनुजावतारं विधाय वेधप्रमुखैः विरिञ्चप्रधानैः सुधाशैः देवैः विज्ञापितः सन् धाम निजस्थानं गन्तुं इयेष ऐच्छत् ।

ಈ ವಿಧವಾಗಿ ರಾಮಚಂದ್ರನು ಮನುಷ್ಯಲೀಲಾಗಳಿಂದ ತನ್ನ ಪ್ರಭಾವ–ವನ್ನು ತೋರಗೊಡದೇ ಮನುಜಾವತಾರವನ್ನು (ಮುಗಿಸಿ) ಸಮಾಪಿಸಿ ಬ್ರಹ್ಮಾದಿದೇವತೆಗಳಿಂದ ವಿಜ್ಞಾಪಿತನಾಗಿ ತನ್ನ ಸ್ಥಾನವನ್ನು ಹೊಂದಲು ಇಚ್ಛೆಸಿದನು.

**त्रिजगदवनधुर्यो दर्शितोदारचर्यः**
**प्रकटितपटुवीर्यो दैत्यवित्रासिशौर्यः ।**
**विरचितसुरकार्यो धाम संरक्षितार्यः**
**सपदि स रघुवर्यः प्राप देवोपचार्यः ।।६६।।**

**त्रिजगदिति** । त्रिजगदवने त्रैलोक्यरक्षणे धुर्यः समर्थः । दर्शिता उदारा महती चर्या सन्मार्गवृत्तिः येन स तथोक्तः । चर्यात्वार्या पथिस्थितिः इत्यमरः । प्रकटितं पटु अमन्दं वीर्यं उत्साहशक्तिर्येन स तथोक्तः । दैत्यवित्रासि शौर्यं बलं यस्य स तथाभूतः । विरचितं सुराणां कार्यं येन स तथोक्तः । संरक्षिताः आर्याः सुजनाः येन स रघुवर्यः देवैः उपचार्यो बहुमानः सन् सपदि धाम प्राप । आप्लृव्याप्तौ लिट् ।

ಮೂಜಗದ ರಕ್ಷಣೆಯಲ್ಲಿ ಸಮರ್ಥ ಸಜ್ಜನಿಕೆಯನ್ನು ತೋರಿದ, ಪರಮೋತ್ಸಾಹಿಯಾದ, ದೈತ್ಯರನ್ನು ಉದ್ವೇಗಗೊಳಿಸಿದ (ಸಂಹರಿಸಿದ) ಪರಾಕ್ರಮಿ. ದೇವಕಾರ್ಯಗೈದ ಸಜ್ಜನರನ್ನು ಸಲಹಿದ, ದೇವತೆಗಳಿಂದ ಪೂಜ್ಯನಾದ ರಘುವರ್ಯನು ಕೂಡಲೆ ತನ್ನ ಮನೆಯನ್ನು ಸೇರಿದ.

**रघुकुलजलधेरुदीयमानः कुवलयमोदमतीव सन्दधानः ।**
**करदलितनिशाचरान्धकारः समवतु नः सततं स रामचन्द्रः।।६७।।**

इदानीं कविवर्णितं रामचरितं सङ्गृह्य स्वेष्टं रामं प्रार्थयते । **रघुकुलेति** । रघुकुलं जलधिरिवेत्युपमितसमासः । अन्यत्र रघुकुलोत्पादितो जलधिरिति उत्तरपदलोपिसमासः । तस्मादुदीयमानः प्रादुर्भवन् । इण् गतावित्यस्मात् धातोः दैवादिकात् अनुदात्तेतः लटः शानच् । अतीव भृशं कुवलयमोदं । अन्यत्र कुवलयानां उत्पलानां मोदं । सन्दधानः संपादयन् । करेण दलिताः निशाचराः राक्षसाः अन्धकार इव येन स तथोक्तः । अत्राप्युपमितसमासः । अन्यत्र करैरंशुभिः दलितः निशाचरोन्धकारो येन स तथाभूतः । सः रामचन्द्रः । अन्यत्र स रामो रामाभिः सहितः स्त्रीभिः नक्षत्ररूपाभिः सहितः चन्द्रः । नः युष्मान् अस्मानपीत्यर्थः । त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यतः (वा)(१.२.७२) इति अस्मद एकशेषविधानात् । सततं समवतु सम्यग्रक्षतु प्रार्थनायां लोट् ।

ರಘುವಂಶಸಿಂಧುವಿನಲ್ಲಿ ಉದಯಿಸಿ, ಭೂವಲಯನ್ನೈದಿಲೆಗೆ ಅತ್ಯಂತ ಹರ್ಷವನ್ನು ತಂದು, ತನ್ನ ಕರ(ಕಿರಣ)ದಿಂದ ನಿಶಾಚರಾಂಧಕಾರವನ್ನು ನಾಶಮಾಡಿದ, ರಾಮಚಂದ್ರನು ದೇವತೆಗಳೆಂಬ ನಕ್ಷತ್ರದಿಂದ ಕೂಡಿ ನಮ್ಮನ್ನು ರಕ್ಷಿಸಲಿ.

**सद्विद्यागुरुसत्यनाथयतिराट्श्रीपादसंसेवन-**
**प्रोद्यत्पण्डितराजशब्दबिरुदो यः श्रीनिवासः कविः ।**
**तस्य श्रीरघुनाथकीर्तनसुधास्वादैकवृत्तेः कृतौ**
**काव्ये सत्यनिधीयचारुचरिते सर्गोयमाद्योऽभवत् ।।६८।।**

**इति सत्यनिधिविलासे प्रथमः सर्गः ।**

**सद्वेद्येति** । सद्विद्यानां चतुर्दशविद्यानां गुरोः सत्यनाथयतिराज्ञः यौ श्रीयुतपादौ तयोः सेवनेन प्रोद्यत् प्रसिद्धपण्डितराज इति शब्दः बिरुदः प्रशंसाहेतुर्यस्य स तथोक्तः । सः श्रीनिवासः कविरभूदित्यर्थः । श्रीरघुनाथस्य कीर्तनमेव सुधा तस्याः आस्वादे एका मुख्या वृत्तिर्यस्य तस्य श्रीनिवासकवेः कृतौ सत्यनिधेरिदं सत्यनिधीयम् । वा नामधेयस्य वृद्धसंज्ञायां वृद्धाच्छ (४.२.११४) इति छप्रत्ययः । तच्चारु चरितं यस्मिन् तस्मिन् काव्ये अयमाद्यः सर्गः । अभवत् । एवमुत्तरत्रापि द्रष्टव्यम् ।

**इति श्रीसत्यनाथश्रीचरणाराधक लक्ष्मीश्वरसिंहकृतायां**
**श्रीमत्सत्यनिधिविलासटीकायां**
**सर्वतोविलासाख्यायां अयमाद्यः सर्गः ।।१।।**

ಚತುರ್ದಶವಿದ್ಯೆಗಳ ಗುರುಗಳಾದ ಶ್ರೀಸತ್ಯನಾಥಯತಿರಾಜರ ಕಾಂತಿಯುತ ಪಾದಗಳಸೇವನದಿಂದ ಪಂಡಿತರಾಜನೆಂಬ ಬಿರುದು ಭೂಷಿತನಾದ, ರಾಮಚಂದ್ರನ ಗುಣವರ್ಣನಸುಧಾಸ್ವಾದನದಲ್ಲೆ ಆಸಕ್ತನಾದ ಶ್ರೀನಿವಾಸಕವಿಯ ಶ್ರೀಸತ್ಯನಿಧಿವಿಲಾಸ ಕಾವ್ಯದಲ್ಲಿ **ಮೊದಲನೆಯ ಸರ್ಗ** ಮುಕ್ತಾಯಗೊಂಡಿದೆ.

## -: अथ द्वितीयः सर्गः :-

**अथ कृष्णात्मना देवो भूभारहरणाय सः ।**
**देवक्यामुदभूच्छौरेः प्राच्यामिन्दुरिवोदधेः ।।१।।**

**अथेति** । अथ रामावतारानन्तरं । द्वापरे इति शेषः । स देवः लक्ष्मीसहायः कृष्णात्मना श्रीकृष्णरूपेण भूभारहरणाय । उदधेः सकाशात् प्राच्यां पूर्वस्यां दिशि इन्दुरिव शौरेः वसुदेवस्य सकाशात् देवक्यां उदभूत् प्रादुर्बभूव ।

ರಾಮಾವತಾರದ ನಂತರ ಆ ಲಕ್ಷ್ಮೀಪತಿಯು ಭೂಭಾರಹರಣಕ್ಕಾಗಿ ಸಮುದ್ರದಿಂದ ಪೂರ್ವದಿಕ್ಕಿನಲ್ಲಿ ಚಂದ್ರ ಮೂಡಿ ಬರುವಂತೆ ವಸುದೇವನಿಂದ ದೇವಕಿಯಲ್ಲಿ ಕೃಷ್ಣನಾಗಿ ಉದಯಿಸಿದನು.

**स गोकुले बाललीलां जनायादर्शयद्वसन् ।**
**मृकण्डसूनवे जातु वटपत्रेशयो यथा ।।२।।**

**स इति** । गोकुले वसन् सः कृष्णः जनाय जातु मृकण्डसूनवे मार्कंडेयाय यथा वटपत्रेशयः तथा बाललीलामदर्शयत् । वटपत्रेशय इत्यत्र "शयवासवासिष्वकालात्" (६.३.१८) इति सप्तम्याः अलुक् ।

ಶ್ರೀಕೃಷ್ಣನು ಮಾರ್ಕಂಡೇಯನಿಗೆ ವಟಪತ್ರಶಾಯಿಯಾಗಿ ತನ್ನನ್ನು ತೋರಿಸಿಕೊಂಡಂತೆ ಗೋಕುಲದಲ್ಲಿ ಜನರಿಗೆ ತನ್ನ ಬಾಲಲೀಲೆಯನ್ನು ತೋರಿಸಿದನು.

**स पूतनादीन् दैतेयान् निघ्नन् गोपीरनन्दयत् ।**
**विध्वंसयन्नन्धकारान्नलिनीरिव भानुमान् ।।३।।**

**स इति** । पूतनादीन् दैतेयान् निघ्नन् स कृष्णः अन्धकारान् विध्वंसयन् भानुमान् सूर्यः नलिनीरिव गोपीः अनन्दयत् ।

ಸೂರ್ಯನು ಅಂಧಕಾರವನ್ನು ನಾಶಮಾಡಿ ಕಮಲಗಳನ್ನು ಸಂತೋಷಗೊಳಿಸುವಂತೆ ಕೃಷ್ಣನು ಪೂತನಾದಿ ದೈತ್ಯರನ್ನು ಸಂಹರಿಸಿ ಗೋಪಿಯರನ್ನು ಸಂತೋಷಗೊಳಿಸಿದನು.

**रेमे स गोपकान्ताभिर्देवो वैणविकाग्रणीः ।**
**रासोत्सवे रतिपतिं तनयं जनयन्निव ।।४।।**

**रेम इति** । वैणविकानां वेणुवादकुशलानां अग्रणीः श्रेष्ठः। "वेणुध्मा स्युर्वैणविका"इत्यमरः । स देवः कृष्णः रासोत्सवे रासक्रीडायां गोपकान्ताभिः रतिपतिं मन्मथं तनयं पुत्रं जनयन्निव रेमे ।

ವೇಣುವಾದಕುಶಲರಲ್ಲಿ ಶ್ರೇಷ್ಠನಾದ ಕೃಷ್ಣನು, ರಾಸೋತ್ಸವದಲ್ಲಿ ಮನ್ಮಥನನ್ನು ಮಗನನ್ನಾಗಿ ಪಡೆಯುವಂತೆ ಗೋಪಿಕೆಯರಿಂದ ಕ್ರೀಡಿಸಿದನು.

**अक्रूरेण समाकृष्टः कृष्णः कंसमशीशमत् ।**
**दावाग्निमिव वातेन नीयमानो घनाघनः ।।५।।**

**अक्रूरेणेति** । अक्रूरेण समाकृष्टः आनीयमानः कृष्णः । वातेन नीयमानो घनाघनः वर्षुकाब्दः । "शक्रो घातुकमत्तेभोवर्षुकाब्दे घनाघन" इत्यमरः । दावाग्निमिव कंसं अशीशमत् शमयामास । शमेर्हेतुमण्णिजन्तात् लुङि णिश्रिद्रुस्रुभ्यः (३.१.४८) इति चङि रूपम् ।

ಗಾಳಿ ಕರೆತಂದ ಮೇಘವು ದಾವಾಗ್ನಿಯನ್ನು ಶಾಂತಗೊಳಿಸುವಂತೆ ಅಕ್ರೂರ ಕರೆತಂದ ಕೃಷ್ಣನು ಕಂಸನನ್ನು ದಮನ ಮಾಡಿದ.

**स्वयंवरे रमारूपामुद्वहन् रुग्मिणीं हरिः ।**
**अहत्वापि स भूपालान् जहारेव भुवो भरम् ।।६।।**

**स्वयंवरेति** । स्वयंवरे रमारूपां रुग्मिणीं उद्वहन् स हरिः भूपालान् स्वयंवरमिलितान् अहत्वापि भुवः भारं जहारेव । अवमानेन भूपालानां मृतप्रायत्वात् इति भावः ।

ಕೃಷ್ಣನು ಸ್ವಯಂವರದಲ್ಲಿ ರಮಾರೂಪಳಾದ ರುಕ್ಮಿಣಿಯನ್ನು ಮದುವೆಯಾಗಿ ಆ ಸ್ವಯಂವರದಲ್ಲಿ ಸೇರಿದ ರಾಜರನ್ನು ಸಂಹರಿಸದೇ ಭೂಭಾರವನ್ನು ಹರಣಮಾಡಿದನು. ಅವಮಾನದಿಂದ ರಾಜರು ಮೃತಪ್ರಾಯರಾದರು ಎಂದು ಭಾವ.

**अष्टभिर्महिषीभिस्स रुग्मिण्यादिभिराबभौ ।**
**योगी स्वयोगसिद्धाभिरष्टाभिरिव भूतिभिः ।।७।।**

**अष्टभिरिति** । स कृष्णः । स्वस्य योगेन अष्टाङ्गलक्षणेन सिद्धाभिः उत्पन्नाभिः अष्टाभिः भूतिभिः योगीव । स्वस्य योगेन संबन्धेन सिद्धाभिः नियताभिः अष्टाभिः रुग्मिण्यादिभिः महिषीभिः आबभौ ।

ಯೋಗಿಯು ತನ್ನ ಅಷ್ಟಾಂಗಯೋಗದಿಂದ ಉಂಟಾದ ಅಷ್ಟೈಶ್ವರ್ಯಗ–ಳಿಂದ ಶೋಭಿಸುವಂತೆ, ತನ್ನ ಸಂಬಂಧದಿಂದ ನಿಯತರಾದ ರುಕ್ಮಿಣೀ ಮೊದಲಾದ ಅಷ್ಟಮಹಿಷಿಯರಿಂದ ಕೃಷ್ಣನು ಶೋಭಿಸಿದನು.

**भौमाहृता राजकन्याः वव्रिरे तं रमापतिम् ।**
**उद्यन्तं नलिनीकान्तमग्निरुद्धा इव त्विषः ।।८।।**

**भौमाहृता इति** । भौमेन नरकेण आहृताः बलात् आनीय रुद्धाः राजकन्याः । अग्नौ रुद्धाः "सायमग्निं प्रविशन्तीति" श्रुतेः । तत् त्विषः रुचयः उद्यन्तं नलिनीकान्तम् सूर्यमिव तं रमापतिं कृष्णं वव्रिरे वृतवन्त्यः ।

ನರಕಾಸುರನಿಂದ ಬಂಧಿತರಾದ ರಾಜಕನ್ಯೆಯರು ಸಾಯಂಕಾಲದಲ್ಲಿ ಅಗ್ನಿಯಲ್ಲಿ ಅಡಗುವ (ರುದ್ಧವಾದ) ರಶ್ಮಿಗಳು, ಪುನಃ ಉದಯಿಸುವ ಸೂರ್ಯನನ್ನು ವರಿಸುವಂತೆ, ರಮಾಪತಿ ಶ್ರೀಕೃಷ್ಣನನ್ನು ವರಿಸಿದರು. ಸಾಯಂಕಾಲದಲ್ಲಿ ಎಲ್ಲಾ ಸೂರ್ಯನ ಕಿರಣಗಳು ಅಗ್ನಿಯಲ್ಲಿ ಅಡಗಿರುತ್ತವೆ. ಪ್ರಾತಃ ಕಾಲದಲ್ಲಿ ಪುನಃ ಸೂರ್ಯನನ್ನು ಸೇರುತ್ತವೆ ಎಂದು ಶ್ರುತಿ.

**भूभारं हरतो विष्णोः सेवार्थं योन्वजायत ।**
**भीमो नाम समीरांशो रामस्य हनुमानिव ।।९।।**

कृष्णस्य सेवार्थं भीमः प्रवृत्तः इति वक्तुं तस्य महिमानं अष्टादशभिः श्लोकैः वर्णयति । **भूभारमित्यादिना** । समीरस्य वायोरंशः भीमो नाम यः रामस्य सेवार्थं हनुमानिव भूभारं हरतो विष्णोः कृष्णस्य सेवार्थं अन्वजायत ।

ರಾಮನ ಸೇವೆಗಾಗಿ ಹನುಮಂತನಾಗಿ ಅವತರಿಸಿದ ವಾಯುದೇವನೇ, ಭೂಭಾರವನ್ನು ನಾಶಮಾಡುವ ಕೃಷ್ಣನ ಸೇವೆಗಾಗಿ ಭೀಮನಾಗಿ ಅವತರಿಸಿದ.

**जायमानो भिया मात्रा निक्षिप्तो योऽद्रिसानुनि ।**
**अचूर्णयत्तं शतधा वज्रपात इवाचलम् ।।१०।।**

**जायमान इति** । जायमानो यः मात्रा कुन्त्या भिया व्याघ्रादिभयेन अद्रिसानुनि निक्षिप्तः सन् वज्रपात इव तं अचलं शतश्रृङ्गाख्यं शतधा अचूर्णयत् ।

ಭೀಮನು ಅವತರಿಸಿದಾಗ ಸಿಂಹಗರ್ಜನೆಯಾಯಿತು. ವ್ಯಾಘ್ರದ ಭಯದಿಂದ ಕೂಸು ಕುಂತಿಯ ಕೈ ಜಾರಿತು. ಬಿದ್ದಿದ್ದಕ್ಕೆ ಶತಶೃಂಗಪರ್ವತ ವಜ್ರಾಯುಧದಿಂದ ತುಂಡಾದಂತೆ ನೂರು ಹೋಳಾಯಿತು.

**दुर्योधनेन द्विषता भोजितो विषमग्निवत् ।**
**दंशितो भुजगैस्ताक्ष्र्य इव न म्रियते स्म यः ।।११।।**

**दुर्योधनेनेति** । द्विषता दुर्योधनेन विषं भोजितः यो भीमः अग्निवत् न म्रीयते स्म । अत्र मुख्यकर्मणि क्तः । "ण्मादयो ण्यंतनिष्कर्मगत्यर्था मुख्यकर्मणि । प्रत्ययं यान्ति दुह्यादि गौणेऽन्येतु यथारुचि" इति वचनात् । "लट् स्मे"ति (३.२.१८) भूते लट् । भुजङ्गैः दंशितः सन् ताक्ष्र्यो गरुत्मानिव न म्रियते स्म ।

ದ್ವೇಷಮಾಡುವ ದುರ್ಯೋಧನನಿಂದ ವಿಷ ಉಣಿಸಲ್ಪಟ್ಟರೂ ಭೀಮಸೇನನು ಅಗ್ನಿಯಂತೆ ಸಾಯಲಿಲ್ಲ. ಹಾವುಗಳಿಂದ ಕಚ್ಚಿಸಲ್ಪಟ್ಟರೂ ಗರುಡನಂತೆ ಮರಣಹೊಂದಲಿಲ್ಲ.

**निपात्यमानो निद्रालुः धार्तराष्ट्रैर्महाह्रदे ।**
**यादोलीलां समासाद्य न क्षतिं योऽभ्यपद्यत ।।१२।।**

**निपात्यमान इति** । निद्रालुः शयानः धार्तराष्ट्रैः धृतराष्ट्रपुत्रैः महाह्रदे निपात्यमानः भीमः यादसां जलजन्तूनां लीलां "यादांसि जलजन्तव" इत्यमरः । समासाद्य क्षतिं न अभ्यपद्यत ।

ದುರ್ಯೋಧನಾದಿಗಳು ಮಲಗಿದ ಭೀಮನನ್ನು "ಪ್ರಮಾಣಕೋಟಿ" ಎಂಬ ಮಡುವಿನಲ್ಲಿ ಬೀಳಿಸಿದರು. ಭೀಮಸೇನನು ಜಲಚರ ಪ್ರಾಣಿಗಳ ಲೀಲೆಯನ್ನಾಡಿ ಮೇಲೆ ಬಂದ. ಯಾವ ತೊಂದರೆಯನ್ನೂ ಹೊಂದಲಿಲ್ಲ.

**लाक्षागृहाग्नेर्निर्गत्य वहन् भ्रातॄंश्च मातरम् ।**
**उपायांश्चतुरः शक्तिं बिभ्राण इव यो बभौ ।।१३।।**

**लाक्षेति** । लाक्षागृहाग्रेः निर्गत्य चतुरः भ्रातॄन् मातरं च वहन् यो भीमः चतुरः उपायान् सामादीन् शक्तिं प्रभुमन्त्रोत्साहलक्षणां बिभ्राण इव बभौ ।

ಲಾಕ್ಷಾಗೃಹಾಗ್ನಿಯಿಂದ ಹೊರಬಂದು, ನಾಲ್ಕು ಜನ ಸಹೋದರರನ್ನು, ತಾಯಿಯನ್ನು ಹೊತ್ತಂತಹ ಭೀಮಸೇನನು ಸಾಮ, ದಾನ, ಭೇದ, ದಂಡ

ವೆಂಬ ಉಪಾಯಗಳನ್ನು ಪ್ರಭುಮಂತ್ರೋತ್ಸಾಹರೂಪಶಕ್ತಿಯನ್ನು ಧರಿಸಿದವನಂತೆ ಶೋಭಿಸಿದನು.

**प्राप्तैकचक्रो यो भीमो जनानां मारकं बकम् ।**
**निजघान महावीर्यः कृत्तिवासा इवान्तकम् ।।१४।।**

**प्राप्तेति** । महावीर्यः, प्राप्तः एकचक्रो नाम ग्रामो येन स तथोक्तः । यो भीमः जनानां मारकं अन्तकं मृत्युं, कृत्तिवासाः रुद्र इव जनानां मारकं बकं निजघान ।

ಮಹಾಸಮರ್ಥನಾದ, ಏಕಚಕ್ರನಗರವನ್ನು ಹೊಂದಿದ ಭೀಮಸೇನನು, ಜನರಿಗೆ ಮಾರಕನಾದ ಯಮನನ್ನು ರುದ್ರನು ಸಂಹರಿಸುವಂತೆ, ಜನರ ಮಾರಕನಾದ ಬಕನನ್ನು ಸಂಹರಿಸಿದನು.

**विप्ररूपप्रतिच्छन्नो यो भीमो भ्रातृभिः सह ।**
**द्रौपदीं वामन इव प्रतिपेदे बलिश्रियम् ।।१५।।**

**विप्रेति** । विप्ररूपेण ब्राह्मणवेषेण प्रतिच्छन्नः । भ्रातृभिः सह यो भीमः, विप्ररूपप्रतिछन्नः वामनः भ्रातृभिः इन्द्रादिभिः सह बलेः श्रियमिव द्रौपदीं प्रतिपेदे ।

ಬ್ರಾಹ್ಮಣವೇಷ ತೊಟ್ಟ ಭೀಮಸೇನನು, ವಾಮನರೂಪಿಯಾದ ಭಗವಂತನು, ತನ್ನ ಸಹೋದರರಾದ ಇಂದ್ರಾದಿಗಳಿಂದ ಕೂಡಿಕೊಂಡು, ಬಲಿಯ ಸಂಪತ್ತನ್ನು ಪಡೆದಂತೆ, ದ್ರೌಪದೀದೇವಿಯನ್ನು ಪಡೆದನು.

**राजसूयेन यजतो भ्रातुःख्यात्यै जरासुतम् ।**
**यो दैत्यवंशप्रथितं पाटयामास वंशवत् ।।१६।।**

**राजेति** । यो भीमः राजसूयेन यजतः भ्रातुः धर्मपुत्रस्य ख्यात्यै दैत्यवंश एव वंशः तत्र प्रथितं जरासुतं जरासन्धम् । वंशवत् वंशेन तुल्यं वंशवत् । "तेन तुल्यं क्रिया चेद्वतिः" (५.१.११५) इति वतिः।

ರಾಜಸೂಯಯಾಗಮಾಡುವ ಯುಧಿಷ್ಠಿರನ ಕೀರ್ತಿಗಾಗಿ ಭೀಮಸೇನನು ದೈತ್ಯರ ವಂಶದಲ್ಲಿ ಪ್ರಸಿದ್ಧನಾದ ಜರಾಸಂಧನೆಂಬ ದೈತ್ಯನನ್ನು ಬಿದಿರಿನಂತೆ ಸೀಳಿದನು.

**द्रौपद्यां क्लिश्यमानायां धार्तराष्ट्रान् दुरात्मनः ।**
**यो हन्तुं भार्गव इव प्रतिजज्ञे नृपाधमान् ।।१७।।**

**द्रौपद्यामिति** । द्रौपद्यां वस्त्राहरणादिना क्लिश्यमानायां सत्यां यो भीमः नृपाधमान् दुरात्मनः धार्तराष्ट्रान् दुर्योधनादीन् हन्तुं, दुरात्मनः नृपाधमान् हन्तुं भार्गव इव प्रतिजज्ञे प्रतिज्ञातवान् ।

ದ್ರೌಪದೀದೇವಿಯು ವಸ್ತ್ರಾಪಹಾರದಿಂದ ಕ್ಲೇಶಬಡುತ್ತಿರುಲು ಭೀಮಸೇನನು ನೃಪಾಧಮರಾದ ದುಷ್ಟದುರ್ಯೋಧನಾದಿಗಳನ್ನು ಸಂಹರಿಸುವ ಪ್ರತಿಜ್ಞೆಯನ್ನು ಪರಶುರಾಮನಂತೆ ಮಾಡಿದನು.

**पितृवत् धर्मपुत्रस्य वाक्यं यो मानयन् प्रभुः ।**
**राज्यं त्यक्त्वा वनं प्राप भीमो राममनुव्रतः ।।१८।।**

**पितृवदिति** । पितुः इव पितृवत् । "तत्र तस्येवे"ति (५.१.११६) षष्ठ्यर्थे वतिः । धर्मपुत्रस्य वाक्यं मानयन् प्रभुं रामं अनुव्रतः अनुवर्तमानः यो भीमः राज्यं त्यक्त्वा वनं प्राप । तथा[1] रामः प्रभुः अपि पितृवाक्यात् राज्यं त्यक्त्वा वनं प्राप । तद्वत् तमनुवर्तमानः भीमोऽपीति भावः ।

ಸಮರ್ಥನಾದ ರಾಮನು ತಂದೆಯ ಮಾತನ್ನು ಗೌರವಿಸಿ ಅರಣ್ಯ ಸೇರಿದಂತೆ ಅಣ್ಣನ ಮಾತನ್ನಾಲಿಸಿ ರಾಜ್ಯವನ್ನು ತೊರೆದು ಸಮರ್ಥನಾದ ಭೀಮಸೇನನು (ರಾಮನನ್ನು ಅನುಸರಿಸಿ) ಕಾಡು ಸೇರಿದನು.

**हिडिम्बमिव किर्मीरं यो जघान वने वसन् ।**
**सौगन्धिकं च द्रौपद्यै ददौ प्रेमेव मूर्तिमत् ।।१९।।**

**हिडिम्बमिति** । वने वसन् यो भीमः हिडिम्बमिव किर्मीरं जघान । मूर्तिमत् प्रेमेव सौगन्धिकं कह्लारकुसुमं "सौगन्धिकं तु कह्लारमि"त्यमरः। द्रौपद्यै ददौ च ।

ವನದಲ್ಲಿ ವಾಸಮಾಡುತ್ತಾ ಭೀಮಸೇನನು ಹಿಡಿಂಬನಂತೆ ಕಿರ್ಮೀರನನ್ನೂ ಸಂಹರಿಸಿದ. ಮೂರ್ತಿಮತ್ತಾದ ಪ್ರೇಮದಂತಿರುವ ಸೌಗಂಧಿಕಾ ಪುಷ್ಪವನ್ನು ದ್ರೌಪದೀದೇವಿಗೆ ಕೊಟ್ಟನು.

**यस्य भीमस्य महिषीमाकाङ्क्षन् द्रुपदात्मजाम् ।**
**कीचकः कीचक इवानश्यदग्रैः शिखां स्पृशन् ।।२०।।**

**यस्येति** । यस्य भीमस्य महिषीं कृताभिषेकां "कृताभिषेका

१. यथा इति भाति ।

महिषी"त्यमरः । द्रुपदात्मजां द्रौपदीं आकाङ्क्षन् कीचकः अग्रेः शिखां ज्वालां स्पृशन् कीचकः वेणुरिव अनश्यत् नष्टोऽभूदित्यर्थः ।

ಭೀಮನ ಪಟ್ಟಮಹಿಷಿಯಾದ ದ್ರೌಪದೀದೇವಿಯನ್ನು ಬಯಸಿದ ಕೀಚಕನು, ಅಗ್ನಿಜ್ವಾಲೆಯನ್ನು ಸ್ಪರ್ಶಮಾಡಿದ ಬಿದಿರಿನಂತೆ ನಾಶಹೊಂದಿದನು.

**युधि वीरेषु पश्यत्सु यो दुःशासनमाक्षिपत् ।**
**वैनतेय इव व्यालं श्वापदं मृगराडिव ।।२१।।**

**युधीति** । युधि वीरेषु पश्यत्सु सत्सु यो भीमः, वैनतेयो गरुत्मान् व्यालं सर्पमिव, मृगराट् सिंहः श्वापदं मृगविशेषमिव दुःशासनं अक्षिपत् हतवान् ।

ಯುದ್ಧದಲ್ಲಿ ವೀರರೆಲ್ಲ ನೋಡುತ್ತಿರುವಂತೆ ಭೀಮಸೇನನು, ಗರುಡನು ಸರ್ಪವನ್ನು, ಸಿಂಹವು ಮೃಗವನ್ನು ಸಂಹಾರಮಾಡುವಂತೆ ದುಃಶಾಸನನನ್ನು ಸಂಹರಿಸಿದನು.

**हत्वा दुर्योधनभ्रातॄन् क्षिपन् दिक्षु व्यराजत ।**
**दिशन्निव बलिं युद्धभूतेभ्यो यो वृकोदरः ।।२२।।**

**हत्वेति** । दुर्योधनभ्रातॄन् हत्वा दिक्षु विक्षिपन् विसृजन् यो वृकोदरः युद्धभूतेभ्यः रणभूमिपिशाचेभ्यः बलिं दिशन् इव व्यराजत ।

ದುರ್ಯೋಧನನ ತಮ್ಮಂದಿರನ್ನು ಸಂಹರಿಸಿ ದಿಕ್ಕುಗಳಲ್ಲಿ ಬಿಸಡುತ್ತಾ, ಭೀಮಸೇನನು ರಣಭೂಮಿಯ ಪಿಶಾಚಿಗಳಿಗೆ ಬಲಿಯನ್ನು ನೀಡುವವನಂತೆ ಶೋಭಿಸಿದನು.

**यो भीमसेनो गदया चक्रे दुर्योधनं युधि ।**
**भग्नोरुकदलीकाण्डं मत्तवारणविक्रमः ।।२३।।**

**य इति** । मत्तवारणस्य उन्मत्तगजस्य विक्रम इव विक्रमो यस्य स तथोक्तः । यो भीमः युधि दुर्योधनं गदया, भग्नौ ऊरू कदलीकाण्डौ इव यस्य तं तथोक्तं चक्रे । यथा मत्तेभः हस्तेन कदलीकाण्डौ छिनत्ति तद्वत् गदया दुर्योधनोरू बभञ्जेति भावः ।

ಮದಭರಿತ ಸಲಗದಂತೆ ಪರಾಕ್ರಮಿಯಾದ ಭೀಮಸೇನನು ಯುದ್ಧದಲ್ಲಿ ದುರ್ಯೋಧನನ ತೊಡೆಗಳೆಂಬ ಬಾಳೆಯ ಕಂಬಗಳನ್ನು ಸೀಳಿದನು.

**दुर्योधनस्य यः शीर्षं पतितस्य रणाजिरे ।**
**मर्दयन्नङ्घ्रिणा रेजे मृजन् भाग्यलिपीरिव ।।२४।।**

**दुर्योधनस्येति** । युधि पतितस्य दुर्योधनस्य शीर्षं शिरः अङ्घ्रिणा मर्दयन् यो भीमः भाग्यलिपीः अक्षरविन्यासान् मृजन् उत्सादयन् इव रेजे ।

ಭೀಮಸೇನನು ಯುದ್ಧದಲ್ಲಿ ಬಿದ್ದಿರುವ ದುರ್ಯೋಧನನ ತಲೆಯನ್ನು ಮರ್ದನ ಮಾಡುತ್ತಾ ಅವನ ಹಣೆಯಲ್ಲಿ ಬರೆದ ಭಾಗ್ಯರೇಖೆಗಳನ್ನು ಅಳಿಸು-ವಂತೆ ಶೋಭಿಸಿದನು.

**हतानां धार्तराष्ट्राणां मानिनीरश्रुलोचनाः ।**
**दर्शयन् यः प्रियां चक्रे हर्षादश्रुविलोचनाम् ।।२५।।**

**हतानामिति** । हतानां धार्तराष्ट्राणां, अश्रूणि लोचनेषु यासां ताः अश्रुलोचनाः । गड्वादित्वात् "परा सप्तमी" । यद्वा अश्रुयुक्तानि लोचनानि यासां ताः तथोक्ताः । मानिनीः अभिमानवतीः स्त्रीः दर्शयन् यो भीमः प्रियां द्रौपदीं हर्षात् अश्रुविलोचनां चक्रे ।

ಭೀಮಸೇನನು, ಹತರಾದ ದುರ್ಯೋಧನಾದಿಗಳ ಹೆಂಡಂದಿರು ಕಣ್ಣೀ-ರಿಡುವದನ್ನು ತೋರಿಸಿದನು. ಆಗ ಪ್ರಿಯಳಾದ ದ್ರೌಪದಿಯ ಕಣ್ಣುಗಳಲ್ಲಿ ಆನಂದಬಾಷ್ಪಗಳು ತುಂಬಿದವು.

**भूभारभूतान् भूपालान् उद्यतस्य पराजितुम् ।**
**अनन्यसाध्यां देवस्य सेवामेवं चकार सः ।।२६।।**

एवं भीमस्य चरितं वर्णयन् प्रकृतमाह । **भूभारेति** । सः भीमः भूभारभूतान् भूपालान् पराजितुं निहन्तुं उद्यतस्य विष्णोः श्रीकृष्णस्य एवं अनन्यसाध्यां अन्यैः साधयितुं अशक्यां सेवां चकार ।

ಭೀಮಸೇನನು ಭೂಮಿಗೆ ಭಾರರಾದ ಅಸುರರನ್ನು ಸಂಹರಿಸಲು ಅವತರಿಸಿದ ಶ್ರೀಕೃಷ್ಣನ ಈ ವಿಧವಾದ, ಇತರರಿಂದ ಮಾಡಲು ಅಸಾಧ್ಯ-ವಾದ ಸೇವೆಯನ್ನು ಮಾಡಿದನು.

**भीमार्जुनादिभिर्भूमेर्भारं संहारयन् हरिः ।**
**जगाम धाम लोकानां चूडारत्नमिवोज्वलम् ।।२७।।**

**भीमेति** । भीमार्जुनादिभिः भूमेर्भारं संहारयन्, "हृक्रोरन्यतरस्यां"

(१.४.५३) । इति कर्मत्वाभावपक्षे कर्तरि तृतीया । हरिः लोकानां भुवनानां चूडारत्नमिव उज्वलं धाम वैकुण्ठाख्यं जगाम ।

ಭೀಮಾರ್ಜುನಾದಿಗಳಿಂದ ಭೂಮಿಯ ಭಾರವನ್ನು ಪರಿಹರಿಸಿ ಶ್ರೀಹರಿಯು ಲೋಕಗಳ ಶಿರೋರತ್ನದಂತಿರುವ ಉಜ್ವಲವಾದ ವೈಕುಂಠ–ವೆಂಬ ತನ್ನ ಮನೆಯನ್ನು ಕುರಿತು ಹೋದನು.

**तिरोहिते भगवति तिष्ये प्राप्ते च दानवाः ।**
**मनुष्यरूपाः पर्यभवन् लोकान् दुःशास्त्रशस्त्रिणः ।।२८।।**

**तिरोहित इति** । भगवति कृष्णे तिरोहिते अन्तर्हिते सति तिष्ये कलौ "तिष्यः पुष्ये कलियुग"इत्यमरः प्राप्ते च सति मनुष्यरूपाः दानवाः दुःशास्त्राण्येव शस्त्राणि एषां सन्तीति दुःशास्त्रशस्त्रिणः सन्तः लोकान् जनान् पर्यभवन् निराचक्रुरित्यर्थः ।

ಭಗವಂತನು ಅಂತರ್ಧಾನವನ್ನು ಹೊಂದಿದ. ಕಲಿಯುಗ ಪ್ರಾಪ್ತವಾಯಿತು. ದಾನವರು ಮಾನವರಾಗಿ ದುಃಶಾಸ್ತ್ರಗಳೆಂಬ ಶಸ್ತ್ರಗಳಿಂದ ಜನರಿಗೆ ಸಚ್ಛಾಸ್ತ್ರ–ಪದ್ಧತಿ ತಪ್ಪಿಸಿದರು.

**सौगन्धिकं यो हरता भीमेन मणिमान् हतः ।**
**स जातः सङ्करो नाम्ना चक्रे दुःशास्त्रपद्धतिम् ।।२९।।**

**सौगन्धिकमिति** । यो मणिमान् सौगन्धिकं हरता भीमेन हतः सः नाम्ना सङ्करो जातः सन् दुःशास्त्राणां पद्धतिं मार्गं चक्रे ।

ಸೌಗಂಧಿಕಾಪುಷ್ಪವನ್ನು ಹರಿಸುವ ಭೀಮಸೇನನಿಂದ ಹತನಾದ ಮಣಿ–ಮಂತನೆಂಬ ದೈತ್ಯನು ಸಂಕರನೆಂಬ ಹೆಸರಿನಿಂದ ಜನಿಸಿ ದುಃಶಾಸ್ತ್ರಗಳನ್ನು ಮಾಡಿದನು.

**दैत्यास्तमनुरुन्धानाः विष्णूत्कर्षासहिष्णवः ।**
**दुरर्थग्रन्थिलान् ग्रन्थान् ग्रथयामासुरुद्धताः ।।३०।।**

**दैत्या इति** । तं मणिमद्रूपं सङ्करं अनुरुन्धानाः अनुवर्तमानाः । "अनुरोधोऽनुवर्तनं"इत्यमरः । विष्णूत्कर्षासहिष्णवः उद्धताः दैत्याः मनुष्यरूपाः सन्तः इत्यर्थः । दुरर्थैः दुष्टार्थैः ग्रन्थिलान् ग्रन्थियुक्तानित्यर्थः। ग्रन्थान् निबन्धान् ग्रथयामासुः ग्रथितवन्तः ।

ದೈತ್ಯರೆಲ್ಲ ಮಾನವರಾಗಿ ಆ ಸಂಕರಾಚಾರ್ಯರನ್ನು ಅನುಸರಿಸಿದರು. ಅವರೆಲ್ಲ ವಿಷ್ಣೂತ್ಕರ್ಷವನ್ನು ಸಹಿಸದವರು. ಮಹಾ ಉನ್ಮತ್ತರು. ಅವರು ದುಷ್ಟಾರ್ಥಗಳಿಂದ ಕಗ್ಗಂಟಾದ ಗ್ರಂಥಗಳನ್ನು ನಿರ್ಮಿಸಿದರು.

**दानवैर्मानवाकारैः सच्छास्त्रपरिपन्थिभिः ।**
**पाषण्डवादकलिलं विदधे मण्डलं भुवः ।।३१।।**

**दानवैरिति** । सच्छास्त्राणां परिपन्थिभिः विरोधिभिः । "अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः"इत्यमरः । मानवाकारैः मनुष्यरूपैः दानवैः भुवः मण्डलं, पाषण्डवादैः कलिलं व्याकुलं विदधे । कर्मणि लिट् ।

ಸಚ್ಛಾಸ್ತ್ರಶತ್ರುಗಳಾದ, ಮಾನವರೂಪದಾನವರು ಭೂಮಂಡಲವನ್ನು ಪಾಷಂಡವಾದಗಳಿಂದ ಕಳವಳಗೊಳ್ಳುವಂತೆ ಮಾಡಿದರು.

**एवं विप्रकृतं लोकं विलोक्य विबुधर्षभैः ।**
**विज्ञापितः स भगवान् आज्ञापयत मारुतम् ।।३२।।**

**एवमिति** । एवं विप्रकृतं निकृतं वञ्चितमित्यर्थः । "निकारो विप्रकारः स्यादि"त्यमरः । लोकं विलोक्य विबुधर्षभैः ब्रह्मादिभिः विज्ञापितः स भगवान् लक्ष्मीसहायः मारुतं वायुं आज्ञापयत ।

ಈ ವಿಧವಾಗಿ ವಂಚಿತವಾದ ಜಗತ್ತನ್ನು ನೋಡಿ ದೇವತೆಗಳು ಭಗವಂತನನ್ನು ಪ್ರಾರ್ಥಿಸಿದರು. ಆ ಭಗವಂತನು ವಾಯುದೇವರನ್ನು ಆಜ್ಞಾಪಿಸಿದನು.

**सद्गुणे मयि निर्दोषे भक्त्याप्ये पुरुषोत्तमे ।**
**प्रकाश्याम्नायहृदयं साधून् सर्वान् समुद्धर ।।३३।।**

आज्ञापनप्रकारमाह । **सद्गुण इति** । सन्तः सत्याः न मिथ्याभूताः, सन्तः साधवः रम्याः न दोषस्पृष्टाश्च, सन्तः विद्यमानाः नित्याः पूर्णाश्च, न तु कदाचिदविद्यमानाश्च, सन्तः प्रशस्ताः श्रुतिभिः श्लाघिताः न त्वौपचारिकाश्च, सन्तः अभ्यर्हिताः अविनाभूताः न पृथग्भूताश्च गुणाः धर्माः यस्य तस्मिन् सद्गुणे "सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सदि"ति अमरोक्तेः । निर्गतः दोषेभ्यो निर्दोष इति तत्पुरुषः । कुगतिप्रादयः (२.२.१८) इत्यतः । निरादयः क्रान्ताद्यर्थे पञ्चम्येति समासविधानात् । निर्गताः दोषाः यस्मात् स निर्दोष इति बहुव्रीहिर्वा । प्रादिभ्यो धातुजस्येति समासविधानात् । यद्वा निर्मक्षिकं इत्यादिवत् अर्थाभावे अव्ययी-

भावः दोषाणामभावो निर्दोषमिति । दोषाभावस्यापि स्वरूपत्वेन सामानाधिकरण्योपपत्तेः । अव्ययीभावपक्षे अव्ययीभावश्चेति (२.४.१८) अव्ययसंज्ञायां अव्ययादाप्सुपः (२.४.८२) इति सुपः प्राप्तं लुकं नाव्ययीभावादतोऽम्त्वपञ्चम्या (२.४.८३) इति निषिध्य विहितस्य अमादेशस्य "तृतीया सप्तम्या बहुलं" (२.४.८४) इति विकल्पिततत्वेन उपकृष्णे कार्यमितिवत् निर्दोष इति सप्तमी श्रुत्युपपत्तेः । भक्त्या भजनेन सेवया श्रवणादिरूपोपासनयेत्यर्थः । माहात्म्यज्ञानलक्षणयेति वा । [1]माहात्म्यज्ञानपूर्वक "स्नेहोभक्तिरितिप्रोक्तः"इति वचनात् । आप्ये प्राप्ये। पुरुषोत्तम इति । यद्यपि पुरुषाभ्यां क्षराक्षराभ्यां उत्तम इति विगृह्य अर्थोक्तौ "पञ्चमी विभक्त" इति पञ्चमीप्राप्तावपि समासविध्यभावः । पुरुषाणां चेतनानां पुरुषेषु वा उत्तम इति पक्षे च "यतश्च निर्धारण" इति षष्ठीसप्तम्योः प्राप्तावपि "न निर्धारण"(२.१.१०)इति षष्ठीसमासप्रतिषेधः। सप्तमीसमासविध्यभावश्च । तथापि पुरुषश्चासौ उत्तमश्चेति कर्मधारयः । तत्र विशेषणविशेष्यभावस्य विवक्षाधीनत्वात् वा, विशेषणं विशेष्येण बहुलमिति (२.१.५७) बहुलग्रहणाद्वा, राजदन्तादिषु परमिति (२.२.३१) राजदन्तादित्वाद्वा पुरुषशब्दस्य पूर्वनिपातोपपत्तेः । अत एव गीतायां "उत्तमः पुरुषस्त्वन्यः"इति सामानाधिकरण्यमेव निर्दर्शितम् । एवं भूते मयि आम्नायानां तदनुसारिस्मृतीनामपि हृदयं शक्तितात्पर्याभ्यां बोधकत्वं प्रकाश्य भाष्यादिग्रन्थैः प्रतिपाद्येत्यर्थः । सर्वान् साधून् सज्जनान् समुद्धर पाषण्डमतं निरस्य तत्ववादनिष्ठान्कुरु इत्यर्थः।

ಸದ್ಗುಣಪೂರ್ಣನಾದ ದೋಷದೂರನಾದ ಪುರುಷೋತ್ತಮನಾದ ಭಕ್ತಿಯಿಂದ ಮಾತ್ರ ಹೊಂದಲ್ಪಡುವ ನನ್ನಲ್ಲಿಯೇ, ಸಕಲ ವೇದಗಳ ತಾತ್ಪರ್ಯ ಉಂಟೆಂದು ಸಾಧಿಸಿ ಸಜ್ಜನರನ್ನು ಉದ್ಧಾರಮಾಡು ಎಂದು ಭಗವಂತ ಆಜ್ಞೆಯಿತ್ತನು.

**इत्याज्ञप्तो भगवता स मरुन्मरुतां वरः ।**
**मध्यगेहगृहे जज्ञे स्वप्रभावं विभावयन् ।।३४।।**

**इतीति** । इति भगवता आज्ञप्तः मरुतां देवानां वरः श्रेष्ठः स मरुत् वायुः स्वप्रभावं विभावयन् प्रकाशयन् मध्यगेहाख्यविप्रगृहे जज्ञे जातः ।

१. माहात्म्यज्ञानपूर्वस्तु सुदृढःसर्वतोऽधिकः ।
स्नेहो भक्तिरिति प्रोक्तः तया मुक्तिर्न चान्यथा ।। तात्पर्यनिर्णये

ಈ ರೀತಿ ಭಗವಂತನಿಂದ ಆಜ್ಞಪ್ತನಾದ ದೇವಶ್ರೇಷ್ಠನಾದ ವಾಯುದೇ–ವನು ತನ್ನ ಪ್ರಭಾವವನ್ನು ಪ್ರಕಾಶಗೊಳಿಸುತ್ತಾ, ಮಧ್ಯಗೇಹಭಟ್ಟರ ಮನೆಯಲ್ಲಿ ಅವತರಿಸಿದನು.

**स बाल एव स्वबलं बालानां विस्मयावहम् ।**
**अशेषविषयज्ञानं वृद्धानामप्यदर्शयत् ।।३५।।**

**स इति**। स मरुद्रूपो बालः बालानां स्ववयसां विस्मयावहं स्वबल-मेव अदर्शयत् । वृद्धानां वयसा ज्ञानेन च महतामित्यर्थः । अशेषविष-यज्ञानमप्यदर्शयत् ।

ಬಾಲಕನ ರೂಪವನ್ನು ಹೊಂದಿದ ವಾಯುದೇವರು ತಮ್ಮ ಸಮಾನ ವಯಸ್ಸಿನವರಿಗೆ ತನ್ನ ಬಲವನ್ನು ತೋರಿಸಿ ಬಾಲಕರನ್ನು ಅಚ್ಚರಿಗೊಳಿಸಿದರು ಜ್ಞಾನವೃದ್ಧರಿಗೆ ವಯೋವೃದ್ಧರಿಗೆ ತಮ್ಮ ಅಶೇಷ ವಿಷಯಗಳ ಬಗ್ಗೆ ಇರುವ ಜ್ಞಾನವನ್ನು ತೋರಿಸಿ, ಆಶ್ಚರ್ಯವಾಗುವಂತೆ ಮಾಡಿದರು.

**स्वेनाधीतां गुरुर्विद्यां तस्मै प्रोवाच केवलम् ।**
**अशेषविद्याविज्ञानसरस्वत्पारदृश्वने ।।३६।।**

**स्वेनेति** । गुरुः अशेषविद्याः विज्ञानानि शिल्पानि च सरस्वान् समुद्रः तस्य पारदृश्वने पारङ्गताय तस्मै बालाय स्वेनाधीतां केवलमधी-तमेव प्रोवाच । न तु तस्य अविदितं प्रोवाचेत्यर्थः ।

ಆ ಬಾಲಕನು ಸಮಸ್ತವಿದ್ಯಾವಿಜ್ಞಾನಸಾಗರತೀರ ತಲುಪಿದವ. ಅವನಿಗೆ ತಿಳಿಯದಿದ್ದದ್ದೇನಿದೆ. ಗುರುಗಳು ತಮಗೆ ತಿಳಿದಿದ್ದನ್ನು ಬಾಲಕನಿಗೆ ಒಪ್ಪಿಸಿದರು. ಶಿಲ್ಪಾದಿಕಲಾಸಾಗರದ ತೀರವನ್ನು ಸದಾ ಕಾಣುವ ಆ ಬಾಲಕನಿಗೆ ತಾನು ಕಲೆತದ್ದನ್ನು ಮಾತ್ರ ಹೇಳಿದರೇ ಹೊರತು, ಬಾಲಕ ತಿಳಿಯದಿದ್ದನ್ನು ಹೇಳಲಿಲ್ಲ.

**यो बभूवाच्युतप्रेक्षो मस्करी स यशस्करम् ।**
**पारिव्राज्यमहाराज्यशासनं तमकारयत् ।।३७।।**

**य इति** । अच्युतप्रेक्षो नाम यो मस्करी भिक्षुः "भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी"त्यमरः । बभूव सः मस्करी यशस्करं तं पारिव्राज्यं सन्यास एव महाराज्यं तस्य शासनं परिपालनं अकारयत् । "हृक्रोरन्यतरस्याम्" (१.४.५३)इति कर्तुः कर्मत्वम् ।

ಪರಮಹಂಸರಾದ ಅಚ್ಯುತಪ್ರೇಕ್ಷರು ಕೀರ್ತಿವಂತನಾದ ಆ ಬಾಲಕನಿಗೆ ಪಾರಿವ್ರಾಜ್ಯವೆಂಬ ಮಹಾರಾಜ್ಯವನ್ನು ಇತ್ತರು.

**एकविंशतिदुर्भाष्यदावाग्निज्वलितं जगत् ।**
**शास्त्रपीयूषवर्षैः सः शान्तं मध्वाम्बुदो व्यधात् ।।३८।।**

**एकवंशतीति** । सः सन्यस्तमध्वनामा अम्बुदो मेघः । एकविंशति दुर्भाष्याण्येव दावाग्निः तेन ज्वलितं जगत् । शास्त्रमेव पीयूषं तस्य वर्षैः शान्तं व्यधात् ।

ಆ ಮಧ್ವಾಚಾರ್ಯರು ಮೇಘದಂತೆ, ಇಪ್ಪತ್ತೊಂದು ದುರ್ಭಾಷ್ಯಗಳೆಂಬ ದಾವಾನಲದಿಂದ ದಗ್ಧವಾದ ಜಗತ್ತನ್ನು ಶಾಸ್ತ್ರವೆಂಬ ಅಮೃತಮಳೆಯಿಂದ ಶಾಂತಗೊಳಿಸಿದರು.

**विचित्रार्थपदैर्भूष्यं गीताभाष्यं विधाय सः ।**
**कृष्णायार्पयितुं प्राप नरनारायणाश्रमम् ।।३९।।**

**विचित्रेति**। सः विचित्रैः अर्थैः पदैश्च भूष्यं अलङ्कार्यं,गीतायाः भाष्यं विधाय, कृष्णाय वेदव्यासाय अर्पयितुं नरनारायणाश्रमं बदरीं प्राप ।

ಮಧ್ವಾಚಾರ್ಯರು ವಿಚಿತ್ರವಾದ ಅರ್ಥ ಮತ್ತು ಪದಗಳಿಂದ ಅಲಂಕೃತ-ವಾದ ಗೀತಾಭಾಷ್ಯವನ್ನು ವಿರಚಿಸಿ, ವೇದವ್ಯಾಸರಿಗೆ ಅರ್ಪಿಸಲು ನರನಾರಾ-ಯಣರ ಆಶ್ರಮಕ್ಕೆ ಹೋದರು.

**नारायणेन या दत्ताः वेदव्यासाभिधाः शिलाः ।**
**रेजे स ताभिरष्टाभिः मूर्ताभिरिव सिद्धिभिः ।।४०।।**

**नारायणेनेति** । सः नारायणाश्रमं प्राप्तो मध्वाचार्यः नारायणेन वेद-व्यासाभिधाः वेदव्याससंज्ञाः याः शिलाः दत्ताः अष्टभिः ताभिः मूर्ताभिः अष्टाभिः सिद्धिभिरिव रेजे ।

ನಾರಾಯಣಾಶ್ರಮವನ್ನು ಹೊಂದಿದ ಮಧ್ವಾಚಾರ್ಯರಿಗೆ ನಾರಾಯಣನು ವೇದವ್ಯಾಸವೆಂಬ ಹೆಸರಿನ ಎಂಟು ಶಿಲೆಗಳನ್ನು (ವ್ಯಾಸಮುಷ್ಟಿಕೆಗಳನ್ನು) ಕೊಟ್ಟನು. ಆ ಎಂಟು ಶಿಲೆಗಳಿಂದ ಆಚಾರ್ಯರು ಮೂರ್ತಿಮತ್ತಾದ ಅಷ್ಟಸಿದ್ಧಿಗಳಿಂದ ಶೋಭಿಸುವಂತೆ ಶೋಭಿಸಿದರು.

**न्यायप्रसूनैः ग्रथितं शास्त्रं माल्यमिवोज्ज्वलम् ।**
**अर्पयित्वा स कृष्णाय प्रसन्नाय न्यवर्तत ।।४१।।**

**न्याय इति** । स मध्वाचार्यः न्यायाः प्रसूनानि इव तैः ग्रथितं संदब्धं माल्यमिव उज्वलं शास्त्रं गीताभाष्यरूपं प्रसन्नाय कृष्णाय वेदव्यासाय अर्पयित्वा न्यवर्तत निवृत्तोऽभूदित्यर्थः ।

ಮಧ್ವಾಚಾರ್ಯರು ನ್ಯಾಯಗಳೆಂಬ ಪುಷ್ಪಗಳಿಂದ ಕಟ್ಟಲ್ಪಟ್ಟ ಉಜ್ವಲ-ವಾದ ಗೀತಾಭಾಷ್ಯರೂಪವಾದ ಶಾಸ್ತ್ರಮಾಲೆಯನ್ನು, ಪುಷ್ಪಮಾಲೆಯನ್ನು ಅರ್ಪಿಸುವಂತೆ ವೇದವ್ಯಾಸರಿಗೆ ಅರ್ಪಿಸಿ, ಅಲ್ಲಿಂದ ತೆರಳಿದರು.

**भाष्यानुभाष्ये सन्यायविवृतिं भाष्यमप्यणु ।**
**ऋग्भाष्योपनिषद्भाष्ये दशप्रकरणान्यपि ।।४२।।**

**तात्पर्यं भारतस्यापि चक्रे भागवतस्य च ।**
**ग्रन्थांश्च तन्त्रसारादीन् स सन्मार्गप्रवृत्तये ।।४३।।**

**भाष्येति** । स निवृत्तो मध्वाचार्यः । सन्मार्गस्य प्रवृत्तये भाष्यानु-भाष्ये सन्यायविवृतिप्रभृतीनि तन्त्रसारादीन् ग्रन्थान् निबन्धान् चक्रे इति द्वयोरेकान्वयः ।

ಬದರಿಯಿಂದ ತೆರಳಿದ ಮಧ್ವಾಚಾರ್ಯರು, ಸನ್ಮಾರ್ಗಪ್ರವರ್ತನೆಗಾಗಿ ಭಾಷ್ಯ, ಅನುಭಾಷ್ಯ, ಸನ್ನ್ಯಾಯವಿವೃತಿ, ಅಣುಭಾಷ್ಯ, ತಂತ್ರಸಾರ, ಮಹಾಭಾರತತಾತ್ಪರ್ಯನಿರ್ಣಯ, ಶ್ರೀಮದ್ಭಾಗವತತಾತ್ಪರ್ಯನಿರ್ಣಯ, ಮುಂತಾದ ಗ್ರಂಥಗಳನ್ನು ವಿರಚಿಸಿದರು.

**स्थिरां कृष्णाभिधामर्चां प्रतिष्ठाप्य प्रपूजयन् ।**
**चलां रामाभिधानां च नित्यमानञ्च काञ्चन ।।४४।।**

**स्थिरामिति** । स मध्वाचार्यः स्थिरां कृष्णाभिधां अर्चां प्रतिमां प्रतिष्ठाप्य नित्यं प्रपूजयन् सन् चलां रामाभिधानां दिग्विजयरामसंज्ञां काञ्चन अर्चां प्रतिष्ठाप्य आनञ्च पूजयामास । अंचतेः लिटि "तस्मान्नुड् द्विहलः" (७.४.७१) इति नुट् ।

ಮಧ್ವಾಚಾರ್ಯರು ಕೃಷ್ಣನ ಸ್ಥಿರಪ್ರತಿಮೆಯನ್ನು ಉಡುಪಿಯಲ್ಲಿ ಪ್ರತಿಷ್ಠಾ-ಪನೆ ಮಾಡಿ ಪೂಜಿಸುತ್ತಾ ಚಲವಾದ ದಿಗ್ವಿಜಯರಾಮನ ಪ್ರತಿಮೆಯನ್ನು ನಿತ್ಯದಲ್ಲಿ ಪೂಜಿಸುತ್ತಿದ್ದರು.

**विरक्तं कञ्चनासन्नमन्तेवासिनमात्मनः ।**
**आनन्दतीर्थो विदधे नाम्ना नरहरिं यतिम् ।।४५।।**

**विरक्तमिति** । आनन्दतीर्थो मध्वमुनिः । आत्मनः आसन्नं आप्तं विरक्तं कञ्चन अन्तेवासिनं शिष्यं नाम्ना नरहरिं यतिं विदधे ।

ಮಧ್ವಮುನಿಗಳು ತಮ್ಮನ್ನು ಹೊಂದಿದ, ವಿರಕ್ತರಾದ ಒಬ್ಬ ಶಿಷ್ಯರನ್ನು ನರಹರಿತೀರ್ಥರೆಂಬ ಸಂನ್ಯಾಸಿಗಳನ್ನಾಗಿ ಮಾಡಿದರು.

**सख्ये विप्राय रामो यामर्चां दाशरथीमदात् ।**
**तामानीय प्राप्तराज्यो मह्यं देहीति चाब्रवीत् ।।४६।।**

**सख्य इति** । अत्रापि आनन्दतीर्थ इत्यनुषज्यते । रामः श्रीरघुनाथः दशरथसंबन्धिनीं दाशरथीं यां अर्चां सख्ये विप्राय अदात् । त्वं प्राप्त-राज्यः सन् तामर्चां आनीय मह्यं देहि इति आनन्दतीर्थो अब्रवीच्चेति पूर्वेण समुच्चयः ।

ಆನಂದತೀರ್ಥರು "ಶ್ರೀರಾಮಚಂದ್ರನು, ತನ್ನ ಗೆಳೆಯನಾದ 'ವೇದಗರ್ಭಾಚಾರ್ಯರೆಂಬ ಬ್ರಾಹ್ಮಣನಿಗೆ ಯಾವ ತನ್ನ ಪ್ರತಿಮೆಯನ್ನು ಕೊಟ್ಟನೋ ಆ ಪ್ರತಿಮೆಯನ್ನು ನೀನು ರಾಜ್ಯವನ್ನು ಹೊಂದಿದವನಾಗಿ ನನಗೆ ಅರ್ಪಿಸು" ಎಂದು ನರಹರಿತೀರ್ಥರನ್ನು ಆಜ್ಞಾಪಿಸಿದರು.

**अनवज्ञाय गुर्वाज्ञां स भिक्षुः पर्यटन् महीम् ।**
**ऐतिह्यमश्रुणोत्क्षेत्रे पुरुषोत्तमसंज्ञके ।।४७।।**

**अनवज्ञायेति** । स नरहरिसंज्ञको भिक्षुः गुरोः आज्ञां अनवज्ञाय बहुमानयित्वा महीं पर्यटन् संचरन् पुरुषोत्तमसंज्ञके क्षेत्रे किमप्यैतिह्यं इतिहासमश्रुणोत् ।

ಆ ನರಹರಿತೀರ್ಥರು ಗುರುಗಳ ಆಜ್ಞೆಯನ್ನು ಗೌರವಿಸಿ ಭೂಮಿಯಲ್ಲಿ ಸಂಚರಿಸುತ್ತಾ ಪುರುಷೋತ್ತಮಕ್ಷೇತ್ರದಲ್ಲಿ ಒಂದು ಐತಿಹ್ಯವನ್ನು ಕೇಳಿದರು.

**मुकुन्दवर्मा भूपालः पुरासीदुत्कलाधिपः ।**
**भुजाद्रिमथितारातिसिन्धूद्यच्छ्रीस्वयंवृतः ।।४८।।**

ऐतिह्यप्रकारमाह । **मुकुन्देति** । उत्कलानां देशानामधिपः । भुज एव अद्रिः मन्दरः तेन मथिताः अरातयः शत्रव एव सिन्धुः तस्मादुद्यती या जयश्रीः तया स्वयं वृतः मुकुन्दवर्मा भूपालः पुरा त्रेतायुगे आसीत् ।

१. यदा द्विजो वेदगर्भो रामदर्शनतत्परः ।।५६।।
तदा तस्मै ददौ राम स्वीयां मूर्तिं दयानिधिः । तृतीयशाखा (गुरुवंशकथाकल्पतरु) ।

(ಇನ್ನು ಮುಂದೆ ನರಹರಿತೀರ್ಥರು ಕೇಳಿದ ಐತಿಹ್ಯವನ್ನು ಹೇಳುವರು) ತ್ರೇತಾಯುಗದಲ್ಲಿ ಉತ್ಕಲದೇಶದಲ್ಲಿ ತನ್ನ ಭುಜಮಂದರಗಳಿಂದ ಶತ್ರುಗಳ-ಸಾಗರವನ್ನು ಕಡೆದು ಜಯಸಿರಿಯನ್ನು ಪಡೆದ ಮುಕುಂದವರ್ಮನೆಂಬ ರಾಜನಿದ್ದನು.

**अश्रान्तकमलाकान्तसेवाश्रान्तमना नृपः ।**
**जगन्नाथं गन्तुकामः प्रजिघाय पुरोधसम् ।।४९।।**

**अश्रान्तेति** । अश्रान्तं सन्ततं कमलाकान्तस्य सेवायां श्रान्तं मनो यस्य स तथोक्तः। नृपो मुकुन्दवर्मा जगन्नाथं क्षेत्रं, गन्तुं कामो यस्य सः तथोक्तः सन् । "तुं काममनसोरपी"ति तुमनो मकारस्य लोपः । पुरोधसं पुरोहितं प्रजिघाय प्रहितवान् ।

ನಿರಂತರ ಕಮಲಾಕಾಂತನ ಸೇವೆಯಲ್ಲಿ ಶ್ರಾಂತವಾದ ಮನಸ್ಸುಳ್ಳ ಮುಕುಂದವರ್ಮನು ಜಗನ್ನಾಥಕ್ಷೇತ್ರಕ್ಕೆ ಹೋಗುವ ಮನಸ್ಸು ಮಾಡಿ ಮೊದಲು ಅಲ್ಲಿಗೆ ಪುರೋಹಿತನನ್ನು ಕಳುಹಿಸಿದನು.

**पुरतः प्रहितो राज्ञा परिज्ञानाय स द्विजः ।**
**अभिज्ञाय हरेःक्षेत्रं दृष्टं तस्मै न्यवेदयत् ।।५०।।**

**पुरत इति** । राज्ञा परिज्ञानाय जगन्नाथस्येति शेषः । पुरतः प्रहितः सः द्विजः पुरोधाः हरेः क्षेत्रं अभिज्ञाय, तत्र दृष्टं तस्मै राज्ञे न्यवेदयत् ।

ಜಗನ್ನಾಥಕ್ಷೇತ್ರಪರಿಜ್ಞಾನಕ್ಕಾಗಿ ಮುಂಚಿತವಾಗಿ ಕಳುಹಿಸಲ್ಪಟ್ಟ ಬ್ರಾಹ್ಮ-ಣನು ಆ ಕ್ಷೇತ್ರವನ್ನು ತಿಳಿದು ಅಲ್ಲಿ ಕಂಡದ್ದನ್ನು ರಾಜನಲ್ಲಿ ನಿವೇದಿಸಿದನು.

**प्रस्थिते नृपतौ तस्मिन् सानीके तद्दिदृक्षया ।**
**तदैव तदभूत् भूरि पांसुसम्पातपूरितम् ।।५१।।**

**प्रस्थित इति** । सानीके ससैन्ये तस्मिन् नृपतौ तस्य क्षेत्रस्य दिदृक्षया द्रष्टुमिच्छया प्रस्थिते गते सति तदैव तज्जगन्नाथक्षेत्रं भूरिभिः पांसूनां सम्पातैः समूहैः पूरितं आच्छन्नमासीत् ।

ಮುಕುಂದವರ್ಮನು ಸೈನ್ಯದಿಂದ ಸಜ್ಜಾಗಿ ಜಗನ್ನಾಥಕ್ಷೇತ್ರವನ್ನು ನೋಡಲು ಹೊರಡುತ್ತಿರಲು ಅತ್ತ ಜಗನ್ನಾಥಕ್ಷೇತ್ರವು ಬಹಳವಾದ ಮರಳಿ-ನಿಂದ ಆಚ್ಛಾದಿತವಾಯಿತು.

**अलब्धकामं राजानं खिद्यमानं तमध्वनि ।**
**गन्धर्वः कोऽपि वचनैः बोधयामास साधुभिः ।।५२।।**

**अलब्धेति** । अलब्धः कामो जगन्नाथदर्शनरूपो मनोरथो येन तं[1] तथोक्तम् । अध्वनि मार्गे खिद्यमानं राजानं कोऽपि गन्धर्वः साधुभिः रम्यैः वचनैः बोधयामास ।

ಜಗನ್ನಾಥನ ದರ್ಶನವನ್ನು ಪಡೆಯಬೇಕೆಂಬ ಬಯಕೆ ಈಡೇರದೇ ಇದ್ದದ್ದರಿಂದ ರಾಜನು ದುಃಖಿತನಾದ. ಮಾರ್ಗದಲ್ಲಿ ರಾಜನನ್ನು ಒಬ್ಬ ಗಂಧರ್ವನು ಸಾಧುವಚನಗಳಿಂದ ಸಾಂತ್ವನಗೊಳಿಸಿ ಮುಂದೆ ಹೇಳುವ ರೀತಿಯಿಂದ ಬೋಧಿಸಿದನು.

**रघुवीरेण विप्राय दत्तामर्चां प्रपद्यताम् ।**
**अर्चयन् तस्य देवस्य प्रसादमुपयास्यसि ।।५३।।**

बोधनप्रकारमाह । **रघुवीरेणेति** । रघुवीरेण विप्राय दत्तां अर्चां प्रपद्य लब्ध्वा तां अर्चां अर्चयन् तस्य देवस्य जगन्नाथस्य प्रसादमुपयास्यसि ।

ರಾಮಚಂದ್ರದೇವರು ವೇದಗರ್ಭಾಚಾರ್ಯರಿಗೆ ಕೊಟ್ಟ ಪ್ರತಿಮೆಯನ್ನು ಹೊಂದಿ ಅದನ್ನು ಪೂಜಿಸು, ಅದರಿಂದ ಜಗನ್ನಾಥನ ಪ್ರಸಾದವನ್ನು ಹೊಂದುವಿ.

**इत्युक्तो राजतिलको गन्धर्वेण स बन्धुवत् ।**
**उपाचरद्रामसखं विप्रं विषयवासिनम् ।।५४।।**

**इतीति** । गन्धर्वेण बन्धुनेव इत्युक्तः सः राजतिलकः स मुकुन्दवर्मा विषये राष्ट्रे वासिनं रामसखं विप्रं उपाचरत् शुश्रूषितवान् ।

ಬಂಧುವಿನಂತೆ ಗಂಧರ್ವನಿಂದ ಉಪದೇಶ ಪಡೆದ ರಾಜಶ್ರೇಷ್ಠನಾದ ಮುಕುಂದವರ್ಮನು ತನ್ನ ರಾಜ್ಯದಲ್ಲಿರುವ ರಾಮನ ಗೆಳೆಯನಾದ ಬ್ರಾಹ್ಮಣನನ್ನು ಸೇವೆಮಾಡಿದನು.

**भक्ताय राज्ञे तामर्चामचर्चं यच्छति स्म सः ।**
**आससाद प्रसादं च नृपस्तामर्चयन् हरेः ।।५५।।**

**भक्तायेति** । स विप्रः भक्ताय भक्तिमते राज्ञे तामर्चां अचर्चं अविचारं यथा भवति तथा "चर्चा संख्या विचारणे"त्यमरः । यच्छति

१. येन स तथोक्त इति (क पुस्तके)

स्म अदात् । "पाघ्राध्मे"ति (७.३.७८) दाणो यच्छादेशः । लट् स्म (३.२.११८) इति भूते लट् । तां अर्चां अर्चयन् नृपश्च हरेः प्रसादं आससाद प्राप्तवान् ।

ಆ ಬ್ರಾಹ್ಮಣನು ಭಕ್ತನಾದ ರಾಜನಿಗೆ ಆ ಪ್ರತಿಮೆಯನ್ನು ನಿರ್ವಿವಾದವಾಗಿ ಕೊಟ್ಟನು. ಆ ಪ್ರತಿಮೆಯನ್ನು ಪೂಜಿಸುತ್ತಾ ರಾಜನು ಹರಿಯ ಪ್ರಸಾದವನ್ನು ಹೊಂದಿದನು.

**तदन्ववायजातानां साऽर्चा निधिरिवाभवत् ।**
**मणिपिञ्जरमञ्जूषापञ्जरान्तरपूजिता ।।५६।।**

**तदिति** । सा अर्चा मणिभिः माणिक्यैः पिञ्जरा चित्रवर्णा या मञ्जूषा सैव पञ्जरं तस्य अन्तरे मध्ये पूजिता सती तस्य मुकुन्दवर्मणः अन्ववाये वंशे । "वंशोऽन्ववायः सन्तान"इत्यमरः । जातानां नृपाणां निधिरिवाभवत् ।

ಆ ಪ್ರತಿಮೆಯು ಮಣಿಗಳಿಂದ ಮಂಡಿತವಾದ ಸಂಪುಷ್ಟದ ಮಧ್ಯದಲ್ಲಿ ನಿತ್ಯವೂ ಪೂಜಿತವಾಗುತ್ತಾ ಮುಕುಂದವರ್ಮನ ವಂಶದವರಿಗೆ ನಿಧಿಯಂತೆ ಶೋಭಿಸಿತು.

**अथ काले समुद्वेलपारावारपराहतम् ।**
**तद्राष्ट्रमभवन्नष्टं पांसुछन्नं युगात्यये ।।५७।।**

**अथेति** । अथ युगात्यये काले सम्यक् उद्वेलेन पारावारेण पराहतं आप्लुतं मग्नमित्यर्थः । तेषां राज्ञां राष्ट्रं पांसुभिः नष्टं छन्नमभवत् ।

ತ್ರೇತಾಯುಗ ಮುಗಿಯುತ್ತಿರಲು ಸಾಗರ ಉಕ್ಕಿಬಂದು ಆ ರಾಷ್ಟ್ರವು ಮರಳಿನಲ್ಲಿ ಮುಳುಗಿತು.

**तत्र नानाजनाकीर्णं राष्ट्रमुत्पाद्य नूतनम् ।**
**सुधन्वाख्यो बहोः कालात् तद्वंश्योऽपालयद्भुवम् ।।५८।।**

**तत्रेति** । बहोः कालात् तेषां राज्ञां वंश्यः सुधन्वाख्यः तत्र नष्टे देशे नानाजनाकीर्णं नूतनं राष्ट्रं उत्पाद्य भुवमपालयत् ।

ಹೀಗೆ ಬಹಳ ಕಾಲ ಕಳೆಯಿತು. ಮುಂದೆ ಆ ವಂಶದವನೇ ಆದ ಸುಧನ್ವ–ನೆಂಬ ರಾಜನು,ನಷ್ಟವಾದ ಈ ದೇಶದಲ್ಲಿ ಅನೇಕ ಜನರಿಂದ ಕೂಡಿಕೊಂಡು, ನೂತನ ರಾಜ್ಯವನ್ನು ಸ್ಥಾಪಿಸಿ, ಭುವಿಯನ್ನು ರಕ್ಷಿಸಿದನು.

**मूर्धाभिषिक्तैः तद्वंश्यैरुपभुक्तां वसुन्धराम् ।**
**पालयन्नद्य सुयशाः राजास्ते दिग्जयोद्यतः ।।५९।।**

**मूर्धेति** । तस्य सुधन्वनो वंश्यैः मूर्धाभिषिक्तैः राजभिः । "मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराडि"त्यमरः । उपभुक्तां पालितां वसुन्धरामद्य पालयन् सुयशा नाम दिग्जये उद्यतः आस्ते ।

ಈಗ ಸುಧನ್ವನ ವಂಶದ ರಾಜರುಗಳಿಂದ ಆಳಿದ ಆ ಭೂಮಿಯ ಅರಸ ಸುಯಶನೆಂಬ ರಾಜನು ದಿಗ್ವಿಜಯದಲ್ಲಿ ಉತ್ಸಾಹ ಹೊಂದಿದ್ದಾನೆ.

**इत्यैतिह्यं जनमुखात् श्रुण्वन्नरहरिक्षमी ।**
**उवास तत्र स चिरं गुर्वर्थं साधयन्निव ।।६०।।**

**इतीति**। इत्येवं प्रकारेण ऐतिह्यं जनमुखात् श्रृण्वन्, आख्यातोपयोगे। ४.२९.(५९२) इति पञ्चमी, स नरहरिक्षमी, गुरोः अर्थं, गुरुं वा अर्थं साधयन्निव तत्र पुरुषोत्तमे चिरमुवास ।

ಈ ರೀತಿ ಜನರ ಮುಖದಿಂದ ಇತಿಹಾಸವನ್ನು ಕೇಳಿ ಆ ನರಹರಿತೀರ್ಥರು ಗುರುಗಳಿಗೆ ಅಪೇಕ್ಷಿತವಾದದ್ದನ್ನು ಅಥವಾ ಮಹಾಕಾರ್ಯವನ್ನು ಸಾಧಿಸುವ–ವನಂತೆ ಬಹಳ ಕಾಲ ಅಲ್ಲಿಯೇ ವಾಸಿಸಿದರು.

**तस्मिन् राष्ट्रे परिव्राजि वसत्यद्भुतविक्रमः ।**
**सुयशाः प्रस्थितो जेतुं पाश्चात्यैर्यवनैर्हतः ।।६१।।**

**तस्मिन्निति** । तस्मिन् राष्ट्रे परिव्राजि यतौ वसति सति जेतुं प्रस्थितः गतः । "प्रस्थानं गमनं गम"इत्यमरः । अद्भुतविक्रमः सुयशाः पाश्चात्यैः यवनैः हतः अभूदित्यर्थः ।

ಆ ರಾಜ್ಯದಲ್ಲಿ ನರಹರಿತೀರ್ಥರು ಇರುತ್ತಿರಲು ದಿಗ್ವಿಜಕ್ಕೆ ಹೊರಟ ಅದ್ಭುತವಿಕ್ರಮನಾದ ಸುಯಶನು ಪಾಶ್ಚಾತ್ಯಯವನರಿಂದ ಹತನಾದನು.

**आराजके तदा राष्ट्रे मन्त्रिणो ये विचक्षणाः ।**
**ते राजवरणायादुरौपवाह्यकरे स्रजम् ।।६३।।**

**अराजक इति** । तदा राष्ट्रे अराजके सति, विचक्षणाः मन्त्रिणः राज्ञो वरणाय राजानं वरीतुमित्यर्थः । औपवाह्यस्य राजवाह्यगजस्य करे । "राजवाह्यस्त्वौपवाह्य"इत्यमरः । स्रजं मालां अदुः ददुः ।

ಆಗ ರಾಷ್ಟ್ರದಲ್ಲಿ ಅರಾಜಕತೆ ತಲೆದೋರಲು ವಿಚಕ್ಷಣರಾದ ಮಂತ್ರಿಗಳು ರಾಜನನ್ನು ಅರಸಲು ಪಟ್ಟದಾನೆಯ ಕೈಯಲ್ಲಿ ಮಾಲೆಯನ್ನು ಕೊಟ್ಟರು.

**स भ्रमन् परितो हस्ती पश्यन् नरहरिं यतिम् ।**
**आमुच्य कण्ठे तां मालां वहन् भद्रासने व्यधात् ।।६४।।**

**स इति** । परितो भ्रमन् सः हस्ती, नरहरिं यतिं पश्यन् कण्ठे मालां आमुच्य निक्षिप्य वहन् भद्रासने सिंहासने न्यधात् निवेशयामास ।

ಆ ಪಟ್ಟದಾನೆಯು ಎಲ್ಲ ಕಡೆ ಸಂಚರಿಸುತ್ತಾ ನರಹರಿತೀರ್ಥರನ್ನು ಕಂಡು ಅವರ ಕೊರಳಲ್ಲಿ ಮಾಲೆಯನ್ನು ಹಾಕಿ ಅವರನ್ನು ಸಿಂಹಾಸನದಲ್ಲಿ ಸ್ಥಾಪಿಸಿತು.

**प्राप्तराज्यः स यतिराट् गन्तुं पावकमुद्यताम् ।**
**न्यषेधद्राजमहिषीमन्तर्वत्नीं विभावयन् ।।६५।।**

**प्राप्तेति** । प्राप्तराज्यः सः यतिराट्, स पावकं गन्तुं प्रवेष्टुं उद्यतां राजमहिषीं अन्तर्वत्नीं गर्भिणीं विभावयन् सूचयन् न्यषेधत् अग्निप्रवेशात् निषेधयामासेत्यर्थः ।

ರಾಜ್ಯವನ್ನು ಹೊಂದಿ ನರಹರಿತೀರ್ಥರು ಅಗ್ನಿಪ್ರವೇಶವನ್ನು ಮಾಡಹೊರಟ ರಾಣಿಯನ್ನು "ಗರ್ಭಿಣೀಸ್ತ್ರೀಯರು ಸಹಗಮನ ಹೊಂದಬಾರದೆಂದು" ಸೂಚಿಸುತ್ತಾ ನಿಷೇಧಿಸಿದರು.

**तस्मिन् रक्षति गां भिक्षौ काले राज्ञी पतिव्रता ।**
**असूत तनयं दीप्तं विभावसुमिवारणिः ।।६६।।**

**तस्मिन्निति** । तस्मिन् भिक्षौ गां रक्षति सति, पतिव्रता राज्ञी काले प्रसूतिसमये । अरणिः निर्मथनकाष्टं । "निर्मथ्यदारुणित्वरुणिर्द्वयोरि" त्यमरः । विभावसुं वह्निमिव दीप्तं तनयं असूत जनयामास ।

ನರಹರಿತೀರ್ಥರು ರಾಜ್ಯಭಾರ ಮಾಡುತ್ತಿರಲು, ಪತಿವ್ರತೆಯಾದ ರಾಣಿಯು ಪ್ರಸೂತಿಸಮಯದಲ್ಲಿ ಆರಣಿಯು (ನಿರ್ಮಥನಮಾಡಿ ಅಗ್ನಿಯನ್ನು ಪಡೆಯುವ ಕಾಷ್ಠವು) ಅಗ್ನಿಯನ್ನು ಪಡೆಯುವಂತೆ ದೀಪ್ತನಾದ ಮಗನನ್ನು ಹೆತ್ತಳು.

**वर्धमानं सुशर्माणं पश्यन् राजसुतं मुनिः ।**
**अकरोद्द्वादशसमा राज्यं प्राज्यपराक्रमः ।।६७।।**

**वर्धमानमिति** । वर्धमानं सुशर्माणं राजसुतं पश्यन्, प्राज्यः बहुलः पराक्रमो यस्य स मुनिः । द्वादश समाः वर्षाणि । "संवत्सरोऽब्दो हायनोऽस्त्री शरत्समा"इत्यमरः । "कालाध्वनोरत्यन्तसंयोग" (५.३.५) इति द्वितीया । राज्यमकरोत् ।

ಬೆಳೆಯುವ ರಾಜಕುಮಾರನಾದ ಸುಶರ್ಮನನ್ನು ನೋಡಿ ಮಹಾಪರಾಕ್ರಮಿ-ಗಳಾದ ನರಹರಿತೀರ್ಥರು ಹನ್ನೆರಡು ವರ್ಷಗಳ ಕಾಲ ರಾಜ್ಯಭಾರ ಮಾಡಿದರು.

**दत्वा सुशर्मणे राज्यं उद्यद्यौवनशालिने ।**
**ऐच्छद्गन्तुं स कर्मन्दी मुक्तसाम्राज्यबन्धनः ।।६८।।**

**दत्वेति** । स कर्मन्दी, उद्यद्यौवनेन शालते शोभते इति उद्यद्यौवन-शाली तस्मै सुशर्मणे राज्यं दत्वा । मुक्तं साम्राज्यमेव बन्धनं येन सः तथोक्तः सन् गन्तुं ऐच्छत् ।

ಸನ್ಯಾಸಿಗಳಾದ ನರಹರಿತೀರ್ಥರು ಶೋಭಿಸುವ ಯೌವನಸಂಪನ್ನನಾದ ಸುಶರ್ಮನಿಗೆ ರಾಜ್ಯವನ್ನು ಕೊಟ್ಟು ಸಾಮ್ರಾಜ್ಯಭಾರದಿಂದ ಬಿಡುಗಡೆ ಹೊಂದಿ ಅಲ್ಲಿಂದ ಹೊರಡಲು ಇಚ್ಛಿಸಿದರು.

**अनपेक्षं राज्यलक्ष्म्यां तं भिक्षुं वीक्ष्य भूमिपः ।**
**केनापि संयोजयितुमिष्टार्थेनाभ्ययाचत ।।६९।।**

**अनपेक्षमिति** । भूमिपः सुशर्मा, राज्यलक्ष्मीं अनपेक्षन्तं भिक्षुं वीक्ष्य केनापि इष्टार्थेन संयोजयितुं प्रापयितुं अभ्ययाचत ।

ರಾಜ್ಯಲಕ್ಷ್ಮೀಯಲ್ಲಿ ಇಚ್ಛೆ ಇಲ್ಲದ ಆ ನರಹರಿತೀರ್ಥರನ್ನು ಕಂಡು ಸುಶರ್ಮನು ಯಾವದಾದರೂ ಇಷ್ಟಾರ್ಥವನ್ನು ಸ್ವೀಕರಿಸುವಂತೆ ಪ್ರಾರ್ಥಿಸಿದನು.

**तिरोहितां स मञ्जूषां रामार्चां ध्यानदर्शिताम् ।**
**विभावयन् सोऽर्थमिष्टं वव्रे तामेव याचितः ।।७०।।**

**तिरोहितामिति** । याचितः स नरहरियतिः, ध्यानेन दर्शितां मञ्जूषा-सहितां रामार्चां विभावयन् क्वचिद्देशे लीनां सूचयन् तामेव अर्चामेव इष्टार्थं वव्रे ।

ಈ ರೀತಿ ಪ್ರಾರ್ಥಿತರಾದ ನರಹರಿತೀರ್ಥರು ತಮ್ಮ ಧ್ಯಾನದಲ್ಲಿ ಪ್ರಕಟ-ಗೊಂಡ ರಾಮದೇವರ ಪೆಟ್ಟಿಗೆಯ ಸ್ಥಳವನ್ನು ಸೂಚಿಸಿ ಆ ಪ್ರತಿಮೆಯನ್ನೇ ತಮ್ಮ ಇಷ್ಟಾರ್ಥವನ್ನಾಗಿ ಕೇಳಿದರು.

**सीताभिरामां रामार्चां गृण्हन्नर्चान्तरास्पृहः ।**
**राज्ञानुमोदितो मौनी गुरवे प्रत्यपादयत् ।।७१।।**

**सीतेति** । अर्चान्तरे प्रतिमान्तरे अस्पृहः, सीताया अभिरामां रामार्चां गृण्हन् राज्ञानुमोदितः अभिवन्दितः मौनी, गुरवे मध्वाचार्याय प्रत्यपादयत् ददौ ।

ಬೇರೆ ಪ್ರತಿಮೆಗಳಲ್ಲಿ ಇಚ್ಛೆ ಇಲ್ಲದ ನರಹರಿತೀರ್ಥರು ಸೀತಾಸಮೇತ ಶ್ರೀರಾಮದೇವರ ಮನೋಹರವಾದ ಪ್ರತಿಮೆಯನ್ನು ಸ್ವೀಕರಿಸಿ ರಾಜನಿಂದ ಅನುಮೋದಿತರಾಗಿ ಹಾಗೂ ಅಭಿವಂದಿತರಾಗಿ ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರಿಗೆ ಆ ಪ್ರತಿಮೆಗಳನ್ನು ಅರ್ಪಿಸಿದರು.

**शिष्योपनीतां तामर्चां स वाय्वंशो महामुनिः ।**
**समानर्चार्चकतपोयोगाप्याधिकसन्निधिम् ।।७२।।**

**शिष्येति** । वायोः अंशभूतः सः महामुनिः मध्वाचार्यः शिष्येण उपनीतां, अर्चकस्य तपोयोगाभ्यां आप्या अधिकसन्निधिः सान्निध्यं यस्याः । ताम् । अर्चां समानर्च सम्यक् पूजयामास ।

ವಾಯುವಿನ ಅವತಾರರಾದ ಮಧ್ವಾಚಾರ್ಯರು ತಮ್ಮ ಶಿಷ್ಯರಾದ ನರಹರಿತೀರ್ಥರು ತಂದ, ಅರ್ಚಕರ ತಪಸ್ಸು, ಯೋಗಸಾಮರ್ಥ್ಯಗಳಿಂದ ಹೆಚ್ಚು ಸನ್ನಿಧಾನಹೊಂದುವ ಶ್ರೀಮೂಲಸೀತಾರಾಮದೇವರ ಪ್ರತಿಮೆಗಳನ್ನು ಪೂಜಿಸಿದರು.

**स्थिरां कृष्णाभिधामर्चां वेदव्यासाभिधाः शिलाः ।**
**तिस्रश्चादात्स्वशिष्येभ्यो यतिभ्यः प्रीतिमानसौ ।।७२।।**

**स्थिरामिति** । असौ मध्वाचार्यः प्रीतिमान् सन्, स्थिरां कृष्णाभिधामर्चां, वेदव्यासाभिधाः तिस्रः शिलाश्च स्वशिष्येभ्यो यतिभ्यः अदात् ।

ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರು ಪ್ರೀತಿಯಿಂದ ಸ್ಥಿರವಾದ ಕೃಷ್ಣಪ್ರತಿಮೆಯನ್ನು ಮತ್ತು ಮೂರು ವ್ಯಾಸಮುಷ್ಟಿಗಳನ್ನು ಯತಿಗಳಾದ ತಮ್ಮ ಶಿಷ್ಯರಿಗೆ ಕೊಟ್ಟರು.

**पद्मनाभयतेः प्रादात् पञ्च व्यासाभिधाः शिलाः ।**
**सदिग्विजयरामार्चां सोऽर्चां दाशरथीमपि ।।७३।।**

**पद्मनाभेति** । स मध्वाचार्यः पञ्च व्यासाभिधाः शिलाः दिग्विजयरा-

मार्चया सहितां दाशरथीं दशरथपूजितां अर्चां मूलरघुनाथप्रतिमामपि पद्मनाभयतेः प्रादात् ।

ಐದು ವ್ಯಾಸಮುಷ್ಟಿಗಳನ್ನು ಮತ್ತು ಶ್ರೀದಿಗ್ವಿಜಯರಾಮ ಪ್ರತಿಮೆಯೊಂದಿಗೆ ಮೂಲರಾಮದೇವರ ಪ್ರತಿಮೆಯನ್ನು ಪದ್ಮನಾಭತೀರ್ಥರಿಗೆ ಕೊಟ್ಟರು.

**इत्थं स्वशिष्यनिवहार्पितदेवतार्चो**
**व्याख्याप्रकाशितसमस्तसदागमार्थः ।**
**दुर्वादिवादतिमिरोपहतिं विनिघ्नन्**
**आनन्दतीर्थतरणिर्जयति स्म भूयः ।।७४।।**

**इत्थमिति** । स्वशिष्याणां निवहेषु अर्पिताः देवतार्चाः येन स तथोक्तः । व्याख्यानेन प्रकाशिताः समस्तसदागमानामर्थाः येन स तथाभूतः । दुर्वादीनां वादा एव तिमिराणि तैः उपहतिं विनिघ्नन् लोकानामिति शेषः । आनन्दतीर्थ एव तरणिः सूर्यः भूयो जयति स्म ।

ತಮ್ಮ ಶಿಷ್ಯಸಮೂಹಕ್ಕೆ ದೇವರ ಪ್ರತಿಮೆಗಳನ್ನು ಕೊಟ್ಟು ತಮ್ಮ ವ್ಯಾಖ್ಯಾನದಿಂದ ವೇದಗಳನ್ನು ಪ್ರಕಾಶಗೊಳಿಸಿ ದುರ್ವಾದಿಗಳ ವಾದವೆಂಬ ಕತ್ತಲೆಯನ್ನು ಕಳೆದು ಆನಂದತೀರ್ಥರೆಂಬ ಸೂರ್ಯರು ಉತ್ಕೃಷ್ಟರಾದರು.

**आज्ञप्तो यो दनुजरिपुणा दानवैर्मानवोत्थैः**
**मिथ्यावादप्रसृमरतमः कन्दलं वर्धयद्भिः ।**
**अन्धीभूते जगति विदधे भाष्यभानुं स मध्वा-**
**चार्योऽगच्छत् सपदि बदरीमागमिष्यन् प्रहर्षात् ।।७५।।**

**आज्ञप्त इति** । मानवेभ्यः उत्थैः उत्पन्नैः । मिथ्यावादेन प्रसृमरस्य विसारिणः तमसो गुणविशेषस्य अज्ञानस्य च कन्दलं विस्तारं वर्धयद्भिः दानवैः जगति अन्धीभूते सति दनुजरिपुणा हरिणा आज्ञप्तो यो भाष्यमेव भानुं विदधे । सः मध्वाचार्यः सपदि आगमिष्यन् सन् प्रहर्षात् बदरीमगच्छत् ।

ಮಾನವರಾಗಿ ಉತ್ಪನ್ನರಾದ ದಾನವರಿಂದ ಪ್ರಸಾರಗೊಂಡ ಮಿಥ್ಯಾವಾದವೆಂಬ ತಮಸ್ಸಿನ ವಿಸ್ತಾರದಿಂದ ವಿಶ್ವವು ಕುರುಡಾಗಲು, ಹರಿಯಿಂದ ಆಜ್ಞಪ್ತರಾದ ಶ್ರೀಮಧ್ವಾಚಾರ್ಯರು, ಭಾಷ್ಯವೆಂಬ ಸೂರ್ಯನನ್ನು ಉದಯಗೊಳಿಸಿ, ಬೇಗನೆ ಬರಬೇಕೆಂದು ಇಚ್ಛೆಸುತ್ತ ಸಂತೋಷದಿಂದ ಬದರಿಯನ್ನು ಕುರಿತು ಹೊರಟರು.

सद्विद्यागुरुसत्यनाथयतिराट् श्रीपादसंसेवन-
प्रोद्यत्पण्डितराजशब्दबिरुदो यः श्रीनिवासः कविः ।
तस्य श्रीरघुनाथकीर्तनसुधास्वादैकवृत्तेः कृतौ
काव्ये सत्यनिधीयचारुचरिते सर्गो द्वितीयोऽभवत् ।।७६।।

सद्विद्येत्यादि । पूर्वं व्याख्यातम् । श्री ।।

इति श्रीसत्यनाथश्रीचरणाराधक लक्ष्मीश्वरसिंहकृतायां
श्रीमत्सत्यनिधिविलासटीकायां
सर्वतोविलासाख्यायां अयं द्वितीयः सर्गः ।।२।।

ದ್ವಿತೀಯ ಸರ್ಗವು ಮುಕ್ತಾಯವಾಯಿತು.

---

## -: अथ तृतीयः सर्गः :-

**अथ पद्मनाभयतिदीधितिमानुदयं समेत्य परितो भ्रमणात् ।**
**प्रकटय्य धाम हरितां वलये पवमानवर्त्म समभासयत ।।१।।**

**अथेति** । अथ मध्वाचार्यस्य बदरीगमनानन्तरं पद्मनाभयतिः दीधितिमान् सूर्य इवेत्युपमितसमासः । उदयं अभ्युदयम् । अन्यत्र उदयपर्वतं समेत्य। परितो देशेषु भ्रमणात् सञ्चारात् । अन्यत्र परितो भ्रमणात् मेरोः परिवर्तमानात्। हरितां वलये धाम प्रभावम् । अन्यत्र धाम दीप्तिं प्रकटय्य उद्भाव्य, पवमानस्य वायोः वर्त्म मार्गं तत्ववादम् । अन्यत्र पवमानवर्त्म नभः समभासयत प्रकाशयामास । यथा सूर्यः उदयाद्रिं प्राप्य मेरोः परिवर्तनेन दिक्षु दीप्तिं उद्भाव्य नभः प्रकाशयति तद्वत् असौ अभ्युदयं प्राप्य नानादेशसञ्चारेण प्रभावं विभाव्य मध्वमतं प्रकाशितवान् इत्यर्थः । अत्र श्लेषानुप्राणितोपमालङ्कारः । "उपमा यत्र सादृश्यलक्ष्मीः उल्लसति द्वयोः" इति लक्षणात् । अस्मिन् सर्गे नानारूपाणि वृत्तानि । अत्र आद्या प्रमिताक्षरा । "प्रमिताक्षरा सजससैरुदिते"ति लक्षणात् ।

ಮಧ್ವಾಚಾರ್ಯರು ಬದರಿಕಾಶ್ರಮಕ್ಕೆ ತೆರಳಿದ ನಂತರ ಪದ್ಮನಾಭತೀರ್ಥರು ಸೂರ್ಯನಂತೆ ವೇದಾಂತಸಾಮ್ರಾಜ್ಯದಲ್ಲಿ ಉದಯಗೊಂಡು, ದೇಶ ಸಂಚರಿಸಿ ಎಲ್ಲ ದಿಕ್ಕುಗಳಲ್ಲಿ ತಮ್ಮ ಪ್ರಭಾವ ಬೀರುತ್ತಾ ಪವಮಾನ-ಮಾರ್ಗವನ್ನು (ತತ್ವವಾದವನ್ನು) ಪ್ರಕಾಶಗೊಳಿಸಿದರು.

**यो भाष्यराजाय गुरूदिताय सत्तर्कदीपावलिमाजहार ।**
**स पद्मनाभाख्यमुनिः प्रपेदे कर्मन्दिसाम्राज्यमुदारकीर्तिः ।।२।।**

तमेव चतुर्भिः वर्णयति । **य इति** । यः गुरुणा उदिताय प्रोक्ताय गुरोः उदिताय उत्पन्नाय वा । भाष्याणां राजेव भाष्यराजा । तस्मै । सत्तर्कदीपावलिं आजहर समर्पितवान् । उदारकीर्तिः स पद्मनाभाख्यमुनिः, कर्मन्दिनां परिव्राजां साम्राज्यं आधिपत्यं प्रपेदे प्राप । यथा राज्ञे नीराजनं कुर्वन् जनः आधिपत्यं लभते तद्वदयं भाष्याय सत्तर्कदीपावलिं नाम टीकां रचयन् यतिश्रैष्ठ्यं प्रापेत्यर्थः । अत्र वृत्तं तु उपजातिः । "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता" इति लक्षणात् ।

ಗುರುಗಳಾದ ಮಧ್ವಾಚಾರ್ಯರು ವಿರಚಿಸಿದ ಭಾಷ್ಯರಾಜನಿಗೆ ಸತ್ತರ್ಕ–ದೀಪಾವಲಿಯನ್ನು (ಎಂಬ ಟೀಕೆಯನ್ನು) ಬೆಳಗಿ ಉತ್ಕೃಷ್ಟಕೀರ್ತಿಶಾಲಿಗಳಾದ ಪದ್ಮನಾಭರು ವೇದಾಂತ ಸಾಮ್ರಾಜ್ಯದ ಆಧಿಪತ್ಯವನ್ನು ಹೊಂದಿದರು.

**नरहरिमाधवसंज्ञावक्षोभ्याख्यं स शिष्यांस्त्रीन् ।**
**प्रभुमन्त्रोत्साहगुणान् रेजे राजेव संपाद्य ।।३।।**

**नरहरीति** । सः पद्मनाभयतिः, नरहरिमाधवसंज्ञौ, अक्षोभ्याख्यं त्रीन् शिष्यान् संपाद्य, त्रीन् प्रभुमन्त्रोत्साहरूपान् गुणान् संपाद्य राजेव रेजे । अत्रोपमालङ्कारः । आर्यावृत्तम् । "लक्ष्मैतत् सप्तगणागोपेता भवति नेह विषमे जः" । षष्ठोऽयं न लघू वा पूर्वार्धे नियतमार्यायाः" इति लक्षणात् ।

ಪದ್ಮನಾಭತೀರ್ಥರು, ನರಹರಿತೀರ್ಥ ಮಾಧವತೀರ್ಥ ಅಕ್ಷೋಭ್ಯತೀ–ರ್ಥರೆಂಬ ಮೂವರು ಶಿಷ್ಯರನ್ನು ಪಡೆದು, ಪ್ರಭುಮಂತ್ರೋತ್ಸಾಹಗಳನ್ನು ಹೊಂದಿದ ರಾಜರಂತೆ ಶೋಭಿಸಿದರು.

**सन्न्यायरत्नावलिसंज्ञितायां कृतिं कृती मौनिवरश्चकार ।**
**तस्या विशेषाननुपात्तदोषान् किं वा जनो वेत्ति जगत्यशेषः।।४।।**

**सन्न्यायेति** । कृती कुशलः मौनिवरः पद्मनाभतीर्थः, सन्न्यायरत्नावलिसंज्ञितायां कृतिं चकार । अनुपात्तदोषान् तस्याः कृतेः विशेषान् जगति अशेषः समस्तो जनः वेत्ति किं वा न वेत्त्येव । किन्तु यः कश्चिदभिज्ञ एव वेत्ति । यद्वा अशेषः शेषभिन्नो अशेषो जनः वेत्ति किं वा न वेत्त्येव किन्तु शेष एव वेत्तीत्यर्थः ।

ಕುಶಲರಾದ ಯತಿಶ್ರೇಷ್ಠರಾದ ಪದ್ಮನಾಭತೀರ್ಥರು, ಸನ್ನ್ಯಾಯರತ್ನಾವಲಿ ಎಂಬ ಗ್ರಂಥವನ್ನು ವಿರಚಿಸಿದರು. ಈ ಕೃತಿಯ ವಿಶೇಷವಿಷಯಗಳನ್ನು ಅಶೇಷಜನರಿಂದ ತಿಳಿಯಲು ಸಾಧ್ಯವೆ? ಇಲ್ಲ. ಶೇಷನೇ ತಿಳಿಯಬೇಕು.

**मूलरघुनाथमूर्तिं सीतां व्यासाभिधाः पञ्चशिलाः ।**
**दिग्विजयराममूर्तिं सोऽष्टौ भूतीरिवापदाचार्यात् ।।५।।**

**मूलेति** । सः पद्मनाभतीर्थः, आचार्यात् मूलरघुनाथमूर्तिं, सीतां, व्यासाभिधाः पञ्च शिलाः, दिग्विजयराममूर्तिं च अष्टौ भूतीः ऐश्वर्याणीव आपत् प्राप्तवान् ।

ಪದ್ಮನಾಭತೀರ್ಥರು ಶ್ರೀಮದಾಚಾರ್ಯರಿಂದ ಮೂಲರಾಮದೇವರ,

ಸೀತಾದೇವಿಯ, ದಿಗ್ವಿಜಯರಾಮದೇವರ ಪ್ರತಿಮೆಗಳನ್ನು, ಐದು ವ್ಯಾಸ ಮುಷ್ಟಿಗಳನ್ನು ಅಷ್ಟೈಶ್ವರ್ಯಗಳನ್ನು ಹೊಂದುವಂತೆ ಹೊಂದಿದರು.

**प्रथममनुबभूव भिक्षुराज्यं नरहरिसंयमिपुङ्गवो गुरूक्तम् ।**
**निखिलनिगमतन्त्रवाददीक्षाविधिगुरुदर्शितगौरवप्रभावः ।।६।।**

**प्रथममिति** । तस्य त्रयः शिष्याः इत्युक्तम् । तत्र प्रथमं, निखिलाः ये निगमाः तन्त्राणि शास्त्राणि च तेषां वाददीक्षा वादनिष्ठा तस्याः विधिना विधानेन हेतुना गुरुणा पद्मनाभतीर्थेन दर्शितो गौरवस्य प्रभावः उत्कर्षो यस्य सः तथोक्तः नरहरिरिति संयमिपुङ्गवो यतिश्रेष्ठः गुरुणा उक्तं आज्ञप्तं भिक्षुराज्यं अनुबभूव अनुभूतवान् ।

ಗುರುಗಳಾದ ಪದ್ಮನಾಭತೀರ್ಥರ ಉತ್ಕೃಷ್ಟವಾದ ಗೌರವಕ್ಕೆ ಪಾತ್ರರಾದ ನರಹರಿತೀರ್ಥರು, ಗುರುಗಳಿಂದ ಆಜ್ಞೆ ಪಡೆದು ಯತಿಕುಲಸಾಮ್ರಾಜ್ಯವನ್ನು ಮೊದಲಿಗೆ ಅನುಭವಿಸಿದರು. ಸಕಲಸದಾಗಮಗಳ ವ್ಯಾಖ್ಯಾನದಲ್ಲಿ ದೀಕ್ಷೆ ತೊಟ್ಟರು.

**ततो महान् माधवतीर्थनामा राज्यं गुरोः पूज्यतरं प्रपेदे ।**
**येन प्रतिष्ठापितराममूर्तिर्वंश्येति कीर्तिं प्रययौ जगत्याम् ।।७।।**

**तत इति** । ततो नरहरितीर्थानन्तरं महान् माधवतीर्थनामा पूज्यतरं गुरोः राज्यं प्रपेदे । येन माधवतीर्थेन प्रतिष्ठापिता या मूर्तिः जगत्यां वंशे भवा वंश्या इति कीर्तिं।[1]दिगादित्वात् यत्। प्रययौ स इति पूर्वेणान्वयः ।

ನರಹರಿತೀರ್ಥರ ಅನಂತರ ಮಾಧವತೀರ್ಥರು ಪೂಜ್ಯತಮವಾದ ಗುರುಗಳ ಸ್ಥಾನವನ್ನು (ವೇದಾಂತಸಾಮ್ರಾಜ್ಯವನ್ನು) ಹೊಂದಿದರು. ಇವರು ವಂಶರಾಮಮೂರ್ತಿಯನ್ನು ಶ್ರೀಮಠದಲ್ಲಿ ಸ್ಥಾಪಿಸಿ ಪೂಜೆ ಮಾಡಿದರು. ಅದು ಇಂದಿಗೂ ಶ್ರೀಮಠದಲ್ಲಿ ಪರಂಪರೆಯ ಪ್ರತಿಮೆಯಾಗಿ ಪೂಜಿತವಾಗುತ್ತಿದೆ.

**अक्षोभ्यस्तपसि रतस्ततो विपक्षैरक्षोभ्यं यतिकुलराज्यमाददानः ।**
**शिक्षार्थं जगति चचार दैत्यमायाभिक्षूणां प्रकटितवादजैत्रयात्रः ।।**

**अक्षोभ्य इति** । ततो माधवतीर्थानन्तरं विपक्षैः प्रत्यर्थिविद्वद्भिः अक्षोभ्यं यतिकुलराज्यं आददानः स्वीकुर्वन् अक्षोभ्यः, दैत्यरूपाणां

१. दिगादिभ्योयत् (४.३.५४) दिश्यं वर्ग्यं।

मायाभिक्षूणां कपटसंन्यासिनां शिक्षार्थं, प्रकटिता वादाय जैत्रयात्रा येन स तथोक्तः सन् जगति चचार ।

ತಪಸ್ಸಿನಲ್ಲಿ ಆಸಕ್ತರಾದ ಅಕ್ಷೋಭ್ಯತೀರ್ಥರು, ಪ್ರತಿವಾದಿವಿದ್ವಾಂಸರಿಂದ ಖಂಡಿತವಾಗದ ವೇದಾಂತಸಾಮ್ರಾಜ್ಯವನ್ನು ಸ್ವೀಕರಿಸಿ, ದೈತ್ಯರಾದ ಮಾಯಾ-ವಾದಿಗಳೆಂಬ ಕಪಟಸನ್ಯಾಸಿಗಳನ್ನು ಶಿಕ್ಷಿಸಲು ದಿಗ್ವಿಜಯಕ್ಕೆ ಹೊರಟರು.

**मिथ्यावादीभसंसत्प्रकटितवचनाटोपसिंहस्वनस्य**
**क्षोणीशद्वारदेशोद्धुषितनिजजयापूरिताशान्तरस्य ।**
**अक्षोभ्याख्यस्य भिक्षोः प्रथयति जयितामुत्तमारण्यवादे**
**वेदान्ताचार्यनाम्ना विरचितजयपद्यात्मकोऽयं निबन्धः ।।९।।**

तं चतुर्भिर्वर्णयति । **मिथ्येति** । मिथ्यावादिनः एव इभाः गजाः तेषां संसदि सभायां "सभासमितिसंसदि"त्यमरः । प्रकटिताः वचनानां आटोपाः स्फूर्तयः एव सिंहस्वनाः यस्य तस्य । तथोक्तस्य एतद्वचना-टोपः मिथ्यावादिनां पलायनहेतुरिति भावः । क्षोणीशानां राज्ञां द्वारदेशे उद्धुषितः प्रकाशितः यो निजजयः स्वोत्कर्षः, तेन आपूरितानि आशा-न्तराणि दिगन्तराणि यस्य तस्य । अक्षोभ्याख्यस्य भिक्षोः उत्तमारण्येन केनचिन्मायावादिभिक्षुणा सह वादे प्राप्ते सति वेदान्ताचार्यनाम्ना मध्य-स्थेन विरचितः जयपद्यात्मकः जयप्रकाशिकश्लोकरूपः अयं निबन्धः सन्दर्भः जयितां विजयित्वं प्रथयति प्रख्यापयति।

ದಿಗ್ವಿಜಯಕ್ಕೆ ಹೊರಟ ಅಕ್ಷೋಭ್ಯತೀರ್ಥರು ತಮ್ಮ ಸ್ಫೂರ್ತಿವಚನಗಳ ಸಿಂಹಗರ್ಜನೆ ಮಾಡಿದರು. ಮಿಥ್ಯಾವಾದಸಲಗಗಳು ಪಲಾಯನ ಮಾಡಿದವು. ರಾಜದ್ವಾರಗಳಲ್ಲಿ ಇವರ ಕೀರ್ತಿಘೋಷಣೆಯಿಂದ ಎಲ್ಲ ದಿಕ್ಕುಗಳು ಪೂರ್ಣ-ವಾದವು. ವಿದ್ಯಾರಣ್ಯರೂ ಇವರೊಂದಿಗೆ ವಾದಕ್ಕಿಳಿದು ಸೋತುಹೋದರು. ವೇದಾಂತದೇಶಿಕರು ಅಲ್ಲಿ ನಿರ್ಣಾಯಕರು. ಅವರು ಸಾರಿದ ಅಕ್ಷೋಭ್ಯ-ತೀರ್ಥರ ವಿಜಯಶ್ಲೋಕ ಇಂತಿದೆ.

**असिना तत्वमसिना परजीवप्रभेदिना ।**
**अवैदिकोत्तमारण्यमक्षोभ्यमुनिरच्छिनत् ।।१०।।**

तमेव निबन्धं पठति । **असिनेति** । अक्षोभ्यमुनेः उत्तमारण्येन सह जीवब्रह्मणोः भेदाभेदकथायां प्रवृत्तायां, तेनाभेदे तत्वमसीति वाक्यं प्रमाणीकृतमिति कथा बहिरेवानुसन्धेया । अक्षोभ्यमुनिः, परः परमात्मा,

**स नित्यनैमित्तिककर्म कुर्वन् आचारपूतो विबुधाग्रगण्यः ।**
**तपोधानानां तपसा महत्वमधश्चकारात्मगुणैरुदारैः ।।२२।।**

**स इति** । नित्यं नैमित्तिकं चेति कर्म कुर्वन् । आचारेण पूतः पवित्रः । विबुधेषु अग्रगण्यः श्रेष्ठः सः पुरुषोत्तमाचार्यः उदारैः आत्मनो गुणैः स्वाभाविकैरित्यर्थः। तपोधनानां तपसा यन्महत्वं तत् अधश्चकार। अधःकृतवान् ।

ಶ್ರೀ ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ನಿತ್ಯ ನೈಮಿತ್ತಿಕಕರ್ಮಗಳಲ್ಲಿ ನಿಷ್ಠರು. ಆಚಾರದಿಂದ ಪವಿತ್ರರು. ಪ್ರಕಾಂಡಪಂಡಿತರು. ಸ್ವಾಭಾವಿಕವಾದ ಉತ್ಕೃಷ್ಟವಾದ ತಮ್ಮ ಗುಣಗಳಿಂದ ತಪಸ್ವಿಗಳು ತಪಸ್ಸಿನಿಂದ ಪಡೆಯುವ ಮಹತ್ವವನ್ನು ಮೀರಿದರು.

**क्रीडासजत्कोकयुगावलोकसंजातहासैरिव फुल्लपद्मैः ।**
**गोदावरीवारि भृशं सुगन्धौ सोऽभूद्विभाते विहितावगाहः ।।२३।।**

**क्रीडेति** । स पुरुषोत्तमाचार्यः । विभाते प्रभाते । क्रीडायां सजतः आसक्तस्य कोकयोः चक्रवाकयोः युगस्य द्वन्द्वस्य अवलोकेन सञ्जातहासैरिव स्थितैः फुल्लैः विकसितैः पद्मैः भृशं सुगन्धौ । "तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्ये"ति पुंवद्भावात् इकोचि विभक्तौ इति न नुम्। गोदावर्याः वारि जले । "आपस्त्री भूम्नि वार्वारि सलिलं कमलं जलमि" त्यमरः । विहितावगाहः कृतस्नानः अभूत् ।

ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಸ್ನಾನಕ್ಕೆಂದು ಗೋದಾವರಿಗೆ ಹೋಗುತ್ತಿದ್ದರು. ಪ್ರಭಾತದಲ್ಲಿ ಕ್ರೀಡೆಯಲ್ಲಿ ಆಸಕ್ತವಾದ ಚಕ್ರವಾಕಪಕ್ಷಿಯನ್ನು ನೋಡಿ ನಗುವಂತೆ ಇವೆ ಅಲ್ಲಿಯ ಅರಳಿದ ಕಮಲಪುಷ್ಪಗಳು. ಅವುಗಳ ಗಂಧದಿಂದ ಸುಗಂಧಿತವಾಗಿದೆ ಗೋದಾವರೀ ನದಿಯ ಜಲ. ಅಂತಹ ಜಲದಲ್ಲಿ ನಿತ್ಯ ಸ್ನಾನ ಮಾಡುತ್ತಾರೆ.

**स राजहंसाङ्घ्रिविलिख्यमानविचित्ररेखावलिभक्तिचारौ ।**
**गोदावरीसैकतसीम्नि मन्त्रं जजाप सावित्रमुपांशु भूयः ।।२४।।**

**स इति** । स पुरुषोत्तमाचार्यः । राजहंसानां अङ्घ्रिभिः विलिख्यमानानां विचित्ररेखानां आवलेः पङ्क्तेः भक्तिभिः रचनाभिः । चारौ मनोहरायां गोदावर्याः सैकतानां सीम्नि प्रदेशे । सावित्रं सवितृदेवताकं मन्त्रं गायत्रीमित्यर्थः । उपांशु रहः भूयः पुनः पुनः जजाप।

ಗೋದಾವರಿಯ ಪವಿತ್ರಮರಳಿನಲ್ಲಿ ರಮಣಿಯವಾದ ರಾಜಹಂಸಗಳು ಚರಣಗಳಿಂದ ಮನೋಹರವಾದ ಚಿತ್ತಾರಗಳನ್ನು ಮೂಡಿಸಿರುತ್ತವೆ. ಆಚಾರ್ಯರು ಸ್ನಾನಮಾಡಿ ಅಂತಹ ಚಿತ್ರಗಳಲ್ಲಿ ಉಪವಿಷ್ಟರಾಗಿ ಪುನಃ ಪುನಃ ಸವಿತೃದೇವತಾಕವಾದ ಗಾಯತ್ರೀ ಮಂತ್ರವನ್ನು ಜಪಿಸುತ್ತಾರೆ.

**अथाहिताग्निः पुरतः प्रणीते विभावसौ नैय्यमिकाग्निहोत्रम् ।**
**विधाय स ब्रह्म पपाठ कृत्वा ब्रह्मांजलिं दर्भमयासनस्थः ।।२५।।**

**अथेति** । अथ गायत्रीजपानन्तरं आहिताग्निः स पुरुषोत्तमाचार्यः पुरतः उदयात् प्रागेव प्रणीते संस्कृते । "प्रणीतः संस्कृतोनल"इत्यमरः। विभावसौ अग्नौ नैय्यमिकाग्निहोत्रं नित्याग्निहोत्रं विधाय दर्भमयासनस्थः सन् ब्रह्माञ्जलिं कृत्वा "पाठे बह्माञ्जलिरि"त्यमरः । ब्रह्म वेदं पपाठ अधीतवान् ।

ಗಾಯತ್ರೀ ಜಪವಾದ ಮೇಲೆ ಆಹಿತಾಗ್ನಿಗಳಾದ ಪುರುಷೋತ್ತಮಾಚಾ- ರ್ಯರು ಸೂರ್ಯೋದಯವಾಗುವ ಮೊದಲೇ ಸಂಸ್ಕೃತವಾದ ಅಗ್ನಿಯಲ್ಲಿ ನಿತ್ಯಾಗ್ನಿಹೋತ್ರವನ್ನು ಮುಗಿಸಿ ದರ್ಭಾಸನದಲ್ಲಿ ಕುಳಿತು ಬ್ರಹ್ಮಾಂಜಲಿಯನ್ನು (ವೇದಪಠನಕಾಲದಲ್ಲಿ ಮಾಡುವ ನಮಸ್ಕಾರವನ್ನು) ಮಾಡಿ ವೇದವನ್ನು ಅಧ್ಯಯನ ಮಾಡುತ್ತಾರೆ.

**आनर्च वक्षो दधतं सपद्मासद्मायमानं परमं पुमांसम् ।**
**तोयैश्च गन्धैस्तुलसीप्रसूनैः धूपैश्च दीपैर्बलिभिः प्रणामैः ।।२६।।**

**आनर्चेति** । स पुरुषोत्तमाचार्यः पद्मायाः लक्ष्म्याः सद्मायमानं गृहा-यमानं वक्षः दधतं परमं पुमासं तोयैः, गन्धैः चन्दनैश्च, तुलसीभिः, प्रसूनैः पुष्पैश्च, धूपैः, बलिभिः उपहारैः, प्रणामैश्च आनर्च पूजयामास ।

ವೇದಾಧ್ಯಯನ ಮುಗಿದ ನಂತರ ಆಚಾರ್ಯರು ಭಗವಂತನ ಪೂಜೆಗೆ ಕುಳಿತು ಕೊಳ್ಳುತ್ತಾರೆ. ಲಕ್ಷ್ಮೀವಕ್ಷನನ್ನು ನೀರು, ಗಂಧ, ತುಲಸೀ, ಪುಷ್ಪ, ಧೂಪ, ದೀಪ, ಬಲಿ, ನೈವೇದ್ಯ, ಪ್ರಣಾಮಗಳಿಂದ ಪರಿಪರಿಯಾಗಿ ಅರ್ಚನೆ ಮಾಡುತ್ತಾರೆ.

**द्वयं जगत्याहित[1]लक्षणेन विशिष्य तेन प्रतिपाद्यमासीत् ।**
**श्रीमध्वशास्त्रं परितोऽस्तदोषं मृष्टान्नमप्यस्तसुधाविशेषम् ।।२७।।**

१. अत्रापि आहतलक्षणेन इति पाठेन भाव्यमिति भाति ।

**द्वयमिति**। जगति आहितलक्षणेन गुणैः प्रसिद्धेन तेन पुरुषोत्तमाचार्येण विशिष्य द्वयं प्रतिपाद्यं देयं व्याख्येयं च आसीत् । किं तद्द्वयमित्यत आह । **श्रीमध्वेति** । परितः समन्तात् अस्तदोषं निर्दोषं श्रीमध्वशास्त्रं अस्तो निरस्तः सुधायाः विशेषः उत्कर्षः येन तत् अमृतायमानमित्यर्थः मृष्टं अन्नमपि ।

ಹೀಗೆ ಗುಣಗಳಿಂದ ಪ್ರಸಿದ್ಧರಾದ ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಯಾವ ದೋಷಗಳಿಲ್ಲದ, ಶ್ರೀಮಧ್ವಶಾಸ್ತ್ರ, ಅಮೃತಕ್ಕೆ ಸಮಾನವಾದ ಮೃಷ್ಟಾನ್ನ, ಇವೆರಡನ್ನೂ ಪ್ರತಿನಿತ್ಯ ಶಿಷ್ಯರಿಗೂ ಬಂಧು ವರ್ಗದವರಿಗೂ ವಿತರಿಸುತ್ತಾರೆ.

**सत्याख्ययैवं सह धर्मपत्न्या प्रवर्तमानस्य गृहेषु तस्य ।**
**चिंता नितान्तं समभूद्दुरन्ता सन्तानहेतोः सकलर्धिभाजः ।।२८।।**

**सत्येति** । सत्याख्यया धर्मपत्न्या सह एवं गृहेषु प्रवर्तमानस्य सकलर्धिभाजः सर्वसंपत्सहितस्य तस्य पुरुषोत्तमाचार्यस्य सन्तानहेतोः नितान्तं दुरन्ता अपाराचिन्ता समभूत् ।

ತಮ್ಮ ಧರ್ಮಪತ್ನೀ ಸತ್ಯಾದೇವಿಯಿಂದ ಸಹಿತರಾಗಿ ಗೃಹಸ್ಥಾಶ್ರಮ ಕೃತ್ಯಗಳಲ್ಲಿ ಪ್ರವೃತ್ತರಾದ, ಸಕಲ ಸಂಪದ್ಭರಿತರಾದ ಆಚಾರ್ಯರಿಗೆ ಒಂದೇ ಒಂದು ದುರಂತವಾದ ಚಿಂತೆ ಅದು ಸಂತಾನದ ಚಿಂತೆ.

**पितामहस्ते प्रबभूव विद्याधीशाभिधो यो गुरुसार्वभौमः ।**
**अस्वप्नरूपश्रियमादधानः स स्वप्नमासाद्य तमाचचक्षे ।।२९।।**

**पितेति** । गुरुसार्वभौमः विद्याधीशाभिधः यः ते पितामहः परमगुरुः प्रबभूव प्रादुरभूत् । अस्वप्नानां देवानां रूपश्रियं आदधानः स विद्याधीशः स्वप्नमासाद्य तं पुरुषोत्तमाचार्यं वक्षमाणमाचचक्षे आख्यातवान् ।

ಸ್ವಾಮೀ ಸತ್ಯವ್ರತತೀರ್ಥರೇ! ಈ ರೀತಿ ಚಿಂತೆಗೀಡಾದ ಪುರುಷೋತ್ತ-ಮಾಚಾರ್ಯರಿಗೆ ನಿಮ್ಮ ಪರಮಗುರುಗಳಾದ, ಗುರುಸಾರ್ವಭೌಮರಾದ, ದೇವತೆಗಳ ಕಾಂತಿಯನ್ನು ಹೊಂದಿದ ಶ್ರೀವಿದ್ಯಾಧೀಶತೀರ್ಥರು, ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರ ಸ್ವಪ್ನದಲ್ಲಿ ಈ ಮಾತುಗಳನ್ನು ಹೇಳಿದರು.

**मज्जन्मभूमाविह वत्स पुर्यां निवासिनस्ते भविता कुमारः ।**
**रामप्रसादाप्तसमस्तविद्यः सोऽग्र्यं पदं चाध्यसिता मदीयम् ।।३०।।**

आख्यानप्रकारमेकेनाह । **मज्जन्मेति** । हे वत्स ! मज्जन्मभूमौ इह

पुर्यां पुण्यस्तंभे निवासिनः ते कुमारः पुत्रः भविता । मत्प्रसादात् भविष्यतीत्यर्थः । स उत्पत्स्यमानः कुमारः रामस्य श्रीरघुनाथस्य प्रसादेन आप्तसमस्तविद्यः सन् अग्र्यं श्रेष्ठं मदीयं पदं अध्यासनं अध्यासिता अधिष्ठानीकरिष्यति प्राप्स्यतीत्यर्थः ।

ಹೇ ಆಚಾರ್ಯರೇ! ನಮ್ಮ ಜನ್ಮಭೂಮಿಯಾದ ಈ ಪುಣ್ಯಸ್ತಂಭದಲ್ಲಿ ನಿವಾಸಮಾಡುವ ನಿಮಗೆ ನಮ್ಮ ಅನುಗ್ರಹದಿಂದ ಒಬ್ಬ ಪುತ್ರನು ಹುಟ್ಟುವನು. ಆತನು ಶ್ರೀರಾಮಚಂದ್ರನ ಅನುಗ್ರಹದಿಂದ ಎಲ್ಲಾ ವಿದ್ಯೆಗಳನ್ನು ಕಲಿತು ಶ್ರೇಷ್ಠವಾದ ನಮ್ಮಿಂದ ಅಧಿಷ್ಠಿತವಾದ ಶ್ರೀ ಉತ್ತರಾದಿಮಠದ ಪೀಠವನ್ನು ಹೊಂದುವನು.

**स्वप्नोपलब्धार्थकथासुधाभिः स धर्मपत्नीं बहुधा निषिञ्चन् ।**
**गुरुं तमेवात्मनि सन्निवेश्य चचार धर्मान् विगतप्रमादः ।।३१।।**

**स्वप्नेति** । स पुरुषोत्तमाचार्यः स्वप्नोपलब्धार्थस्य कथा एव सुधाः ताभिः । धर्मपत्नीं बहुधा निषिञ्चन् प्रीणयन्नित्यर्थः । तमेव गुरुं विद्याधीशं आत्मनि मनसि सन्निवेश्य । विगतः प्रमादोऽनवधानता यस्य सोऽप्रमत्तः सन्नित्यर्थः । "प्रमादोऽनवधानते"त्यमरः । धर्मान् चचार ।

ಸ್ವಪ್ನದಲ್ಲಿ ವಿದ್ಯಾಧೀಶತೀರ್ಥರು ಹೇಳಿದ ಕಥಾಸುಧೆಯಿಂದ ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ತಮ್ಮ ಧರ್ಮಪತ್ನೀಯನ್ನು ಅತ್ಯಂತ ಸಂತೋಷಪಡಿಸಿದರು. ಆ ವಿದ್ಯಾಧೀಶರನ್ನೇ ಮನಸ್ಸಿನಲ್ಲಿ ಸ್ಮರಿಸುತ್ತಾ ಬಹಳ ಎಚ್ಚರದಿಂದ ಧರ್ಮಗಳನ್ನು ಆಚರಿಸಿದರು.

**गुरूदितस्यैव सती महिम्ना सत्याभिधा गर्भमवाप तस्मात् ।**
**लोकोत्तराणां वचनानि लोके नार्थेन दृष्टानि विनाकृतानि।।३२।।**

**गुर्विति** । सत्याभिधा सती साध्वी। "सती साध्वी पतिव्रतेत्यमरः"। गुरोः विद्याधीशस्य उदितस्य वचनस्य महिम्ना । तस्मात् पुरुषोत्तमाचार्यात् गर्भं अवाप । तथा हि । लोकोत्तराणां वचनानि लोके अर्थेन अभिधेयेन प्रयोजनेन च विनाकृतानि रहितानि न दृष्टानि ।

ಗುರುಗಳ ವಚನದ ಮಹಿಮೆಯಿಂದ ಸಾಧ್ವಿಯಾದ ಸತ್ಯಾದೇವಿಯು ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರಿಂದ ಗರ್ಭವನ್ನು ಧರಿಸಿದಳು. ಲೋಕೋತ್ತರರ ವಚನಗಳು ಲೋಕದಲ್ಲಿ ಸತ್ಯವಾಗದೇ ಇರುವುದಿಲ್ಲ. ಸತ್ಯವಾಗುವುದು ನಿಶ್ಚಿತ.

**सा दोहदासादितदेहसादा रराज वक्त्रेण विपाण्डुरेण ।**
**शरत्कृशासैकतमण्डलेन हंसावदातेन सुरापगेव ।।३३।।**

तस्याः गर्भं त्रिभिर्वर्णयति । **सेति** । दोहदेन गर्भकृताभिलाषविशेषेण आसादितः प्राप्तो देहस्य सादः कार्श्यं यस्याः । सा सत्या शरत्कृशा सुरापगा गङ्गा हंसैः अवदातेन गौरेण । "अवदातः सितो गौर"इत्यमरः। सैकतमण्डलेनेव विपाण्डुरेण वक्त्रेण रराज ।

ಈ ರೀತಿ ಗರ್ಭವತಿಯಾದ ಸತ್ಯಾದೇವಿಯು ಬಯಕೆಗಳಿಂದ ಕೃಶಳಾಗಿ, ಶರತ್ ಕಾಲದಿಂದ ಕೃಶವಾದ ಗಂಗೆಯು ಹಂಸಗಳಿಂದ ಬಿಳಿಯಾದ ಉಸು-ಕಿನ ಮಂಡಲದಿಂದ ಶೋಭಿಸುವಂತೆ ಬಿಳಿಚಿದ ಮುಖದಿಂದ ಶೋಭಿಸಿದಳು.

**उदारसंसारपरिभ्रमार्तिविश्रान्तिहेतुं प्रतिपद्य गर्भम् ।**
**सा गौरवेणास्य मृगायताक्षी श्रमं महान्तं पुनराससाद ।।३४।।**

**उदारेति** । मृगायताक्षी सा सत्या उदारे महति संसारे परिभ्रमेण या आर्तिः दुःखं ततः विश्रान्तेः हेतुं गर्भं प्रतिपद्य अस्य गर्भस्य गौरवेण पुनः महान्तं श्रमं आससाद ।

ಜಿಂಕೆಯ ಕಣ್ಣಿನ ಆ ಸತ್ಯಾದೇವಿಯು, ಸಂಸಾರದಲ್ಲಿ ಪರಿಭ್ರಮಿಸುವದ-ರಿಂದ ಉಂಟಾಗುವ ದುಃಖದಿಂದ ವಿಶ್ರಾಂತಿ ಹೊಂದಲು ಗರ್ಭಧರಿಸಿ, ಆ ಗರ್ಭದ ಭಾರದಿಂದ ಮತ್ತೆ ಶ್ರಾಂತಳಾದಳು.

**मुक्ताफलं शुक्तिरिवारणीव विभावसुं रत्नचयं खनीव ।**
**गर्भं दधाना महनीयरूपं संमोदयामास पतिं सती सा ।।३५।।**

**मुक्तेति** । सती सा सत्या शुक्तिः मुक्ताफलमिव । अरणी विभावसुं वह्निमिव । खनी आकरः । "खनीस्त्रियामाकर"इत्यमरः । रत्नचयमिव महनीयरूपं श्लाघ्यस्वरूपं गर्भं दधाना सती पतिं संमोदयामास ।

ಸಾಧ್ವೀಯಾದ ಸತ್ಯಾದೇವಿಯು, ಶಿಂಪು ಮುತ್ತನ್ನು, ಅರಣಿಯು ಅಗ್ನಿಯನ್ನು, ಆಕರವು ರತ್ನರಾಶಿಯನ್ನು ಧರಿಸುವಂತೆ ಮಹನೀಯವಾದ ಗರ್ಭವನ್ನು ಧರಿಸಿ, ಪತಿಯನ್ನು ಆನಂದಪಡಿಸಿದಳು.

**गुणैकपात्रं विलसच्चरित्रं प्रकाशमित्रं जगदीड्यगोत्रम् ।**
**श्रिया विचित्रं यशसा पवित्रं साऽसूत पुत्रं कमनीयगात्रम् ।।३६।।**

**गुणेति** । गुणानां एकं मुख्यं पात्रं भाजनं आश्रयमिति यावत् । विलसन्ति चरित्राणि यस्य तं तथोक्तम् । प्रकाशेन मित्रं सूर्यम् । "द्युमणिस्तरणिर्मित्रः"इत्यमरः। जगति ईड्यं गोत्रं कुलं यस्य तं तथोक्तं। "सन्ततिर्गोत्रजननकुलानि"इत्यमरः । श्रिया शोभया विचित्रं अद्भुतम् । कमनीयं मनोहरं गात्रं यस्य तं पुत्रं असूत जनयामास ।

ಹೀಗೆ ಗುಣಗಳಿಗೆ ಮುಖ್ಯ ಆಶ್ರಯನಾದ, ಉಜ್ವಲವಾದ ಚರಿತ್ರೆಯುಳ್ಳ, ಪ್ರಕಾಶದಿಂದ ಸೂರ್ಯನಂತಿರುವ ವಿಖ್ಯಾತವಾದ ವಂಶವುಳ್ಳ ಕಾಂತಿಯಿಂದ ಅದ್ಭುತನಾದ, ಸುಂದರಶರೀರದ ಮಗನನ್ನು ಹೆತ್ತಳು.

**तदा बभूवुर्हरितः प्रसन्नाः प्रत्यर्थिसंघा नितरां च खिन्नाः ।**
**क्लेशाश्च पित्रोर्मनसो विभिन्नाः मनोरथा साधुषु चोपपन्नाः ।।३७।।**

**तदेति** । तदा सुतस्य प्रसवसमये हरितः दिशः प्रसन्नाः बभूवुः । प्रत्यर्थिनां विपक्षविद्वज्जनानां सङ्घाः नितरां खिन्नाः बभूवुः । पित्रोः मातापित्रोः मनसः क्लेशाश्च विभिन्नाः विशीर्णाः बभूवुः । साधुषु सज्जनेषु मनोरथाश्च उपपन्नाः संपन्ना बभूवुः ।

ಸತ್ಯಾದೇವಿಯು ಮಗನನ್ನು ಹೆತ್ತಾಗ ದಿಕ್ಕುಗಳೆಲ್ಲ ಪ್ರಸನ್ನವಾಗಿದ್ದವು. ಪರವಾದಿಗಳ ಸಮೂಹಗಳು ಅತ್ಯಂತ ದುಃಖಗೊಂಡವು. ತಂದೆತಾಯಿಗಳ ದುಃಖಗಳೆಲ್ಲ ದೂರವಾದವು. ಸಜ್ಜನರ ಬಯಕೆಗಳು ಪೂರ್ಣಗೊಂಡವು.

**पुत्रोत्सवेऽस्मिन् पुरुषोत्तमार्यः सर्वं द्विजेभ्यो धनधान्यरत्नम् ।**
**दत्वा तदाऽशक्यतयैव दातुं यशस्तपोभ्यामवशेषितोऽभूत् ।।३८।।**

**पुत्रेति** । पुरुषोत्तमाचार्यः अस्मिन् पुत्रोत्सवे सर्वं धनधान्यरत्नं द्विजेभ्यो दत्वा । तदा दानसमये दातुमशक्यतया यशस्तपोभ्यां अवशेषितः अभूत्। यशस्तपसी एव अवशिष्टे तयोस्तदैकायतनत्वादिति भावः।

ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಪುತ್ರೋತ್ಸವದಲ್ಲಿ ಧನಧಾನ್ಯರತ್ನಗಳೇ ಮೊದಲಾದೆಲ್ಲವನ್ನೂ ಬ್ರಾಹ್ಮಣರಿಗೆ ದಾನಮಾಡಿದರು. ಆದರೆ ಆಗ ಎರಡು ಉಳಿದವು. ಒಂದು ತಪಸ್ಸು ಇನ್ನೊಂದು ಯಶಸ್ಸು ಏಕೆಂದರೆ ಅವೆರಡನ್ನು ಕೊಡಲು ಸಾಧ್ಯವಿರಲಿಲ್ಲ. ಆದ್ದರಿಂದ ಅವೆರಡೂ ಉಳಿದವು.

**यथा निधिं हस्तगतं दरिद्रो यथा च मर्त्योऽमृतमभ्युपेतम् ।**
**तथा स पृथ्वीविबुधाग्रगण्यः पश्यन् तनूजं मुमुदे निकामम् ।।३९।।**

**यथेति** । हस्तगतं निधिं पश्यन् दरिद्रो यथा अभ्युपेतं अभिमुखेन समीपं गतं अमृतं पश्यन् मर्त्यो यथा तथा पृथ्वीविबुधानां ब्राह्मणानां अग्रगण्यः श्रेष्ठः स पुरुषोत्तमाचार्यः तनूजं पुत्रं पश्यन् निकामं मुमुदे ।

ಆಗ ದರಿದ್ರನು ಕರಗತವಾದ ನಿಧಿಯನ್ನು, ಸಾಯುವ ವ್ಯಕ್ತಿಯು ತನ್ನ ಸಮೀಪದಲ್ಲಿ ಬಂದ ಅಮೃತವನ್ನು ಕಂಡು ಸಂತೋಷಪಡುವಂತೆ, ಸಕಲ ಪಂಡಿತರಲ್ಲಿ ಶ್ರೇಷ್ಠರಾದ ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಮಗುವನ್ನು ನೋಡಿ ಬಹಳ ಆನಂದಪಟ್ಟರು.

**स्वप्नोपलब्धं विमृशन् रघूणां पत्युः प्रसादाधिगतं तनूजम् ।**
**अवेत्य नाम्ना रघुनाथमेव चक्रे स धुर्यः पुरुषोत्तमार्यः ।।४०।।**

**स्वप्नेति** । धुर्यः धुरंधरः स पुरुषोत्तमाचार्यः स्वप्ने उपलब्धं विद्याधीशगुरुवाक्यं विमृशन् अनुसन्दधानः तनूजं रघूणां पत्युः प्रसादेन अधिगतं प्राप्तं अवेत्य ज्ञात्वा नाम्ना रघुनाथमेव चक्रे । रघुनाथनामानं कृतवानित्यर्थः।

ಧುರಂಧರರಾದ ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಸ್ವಪ್ನದಲ್ಲಿ ವಿದ್ಯಾಧೀಶರು ಹೇಳಿದ್ದನ್ನು ನೆನಪಿಸಿಕೊಂಡು, "ಶ್ರೀರಾಮಚಂದ್ರನ ಅನುಗ್ರಹದಿಂದ ಪುತ್ರಜನನವಾಗಿದೆ" ಎಂದು ತಿಳಿದು ಮಗನಿಗೆ ರಘುನಾಥನೆಂದು ನಾಮಕರಣ ಮಾಡಿದರು.

**ननन्द विप्रो न तथा श्रियापि**
**दधानया शश्वदभीष्टमर्थम् ।**
**विलोलनीलोत्पलजित्वराक्ष्या**
**पत्न्या यथा पुत्रनिधिं वहन्त्या।।४१।।**

**ननन्देति** । विप्रः पुरुषोत्तमाचार्यः । पुत्रः एव निधिः तं वहन्त्या । विलोलयोः नीलोत्पलयोः जित्वरे जयशीले अक्षिणी यस्याः सा तया । पत्न्या यथा ननन्द तथा शश्वत् अभीष्टं अर्थं द्रव्यादिरूपं दधानया श्रिया संपदापि न ननन्द ।

ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು, ನೀಲಕಮಲಗಳನ್ನು ಗೆಲ್ಲುವ ಕಣ್ಣುಗಳುಳ್ಳ ಪುತ್ರನಿಧಿಯನ್ನು ಧರಿಸಿದ ಸತ್ಯಾದೇವಿಯಿಂದ ಎಷ್ಟು ಆನಂದವನ್ನು ಹೊಂದಿದರೋ, ಅಷ್ಟು ಆನಂದವನ್ನು ಸದಾ ಧನಕನಕಾದಿರೂಪ ಸಂಪತ್ತಿ-ನಿಂದಲೂ ಹೊಂದಲಿಲ್ಲ.

**संसारपद्याभ्रमणश्रमार्तिनिवृत्तिहेतौ स सुतेऽन्वरांक्षीत् ।**
**तद्बाललीलाकलनातिवेलप्रमोदकल्लोलविलोलचेताः ।।४२।।**

**संसारेति** । तस्य पुत्रस्य बाललीलानां आकलनेन अनुभवेन अतिवेलेषु विजृंभितेषु प्रमोदस्य आनन्दस्य कल्लोलेषु विलोलं चेतः यस्य सः पुरुषोत्तमाचार्यः । संसार एव पद्या मार्गः तस्यां भ्रमणेन यः श्रमः स एवार्तिः तस्याः निवृत्तिहेतौ पुत्रे अन्वरांक्षीत् अनुरक्तवान् । अनुपूर्वात् रंजेः लुङि । "सिचिवदव्रजेति" (७.२.३) वृद्धौ "चोःकुरिति" (८.२.३०) कुत्वे षत्वे नश्चापदान्तेति (८.३.२४) अनुस्वारे च रूपम्।

ಆಚಾರ್ಯರು ಸಂಸಾರಮಾರ್ಗದಲ್ಲಿ ಸಂಚಾರಮಾಡುತ್ತಾ ಶ್ರಾಂತರಾಗಿ ಅದರ ನಿವೃತ್ತಿಗೆ ಕಾರಣನಾದ ಮಗನಲ್ಲಿ ಅನುರಕ್ತರಾದರು. ಮಗುವಿನ ಬಾಲಲೀಲೆಗಳನ್ನು ನೋಡುವದರಿಂದ, ಎಲ್ಲೆ ಮೀರಿದ ಆನಂದ ತರಂಗಗಳಲ್ಲಿ ತೇಲಿ ಹೋಗುತ್ತಿತ್ತು ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರ ಮನಸ್ಸು.

**लम्बालकं मुग्धमुखारविन्दं जंबालकंम्रावयवाभिरामम् ।**
**तं बालकञ्जारुणलोचनान्तं स्वबालकं वीक्ष्य ननन्द माता।।४३।।**

**लंबेति** । माता जननी । लंबाः लम्बमानाः अलकाः चूर्णकुन्तलाः यस्य तं तथोक्तम् । "अलकाश्चूर्णकुन्तला" इत्यमरः । मुग्धं सुन्दरं मुखारविन्दं यस्य तं तथोक्तम् । "मुग्धः सुन्दरमूढयोरिति" विश्वः । जंबालेन पङ्केन कम्रैः मनोहरैः अवयवैः अभिरामम् ।"निषद्वरस्तु जंबालः पङ्कोऽस्त्री शादकर्दमौ"इत्यमरः । "नमिकंपी"(३.२.१६७)त्यादिना कमेर-प्रत्यये कम्र इति रूपम् । बालकञ्जे नूतनारविन्दे इव अरुणौ लोचनान्तौ यस्य तं रघुनाथसंज्ञं स्वं स्वकीयं बालकं वीक्ष्य ननन्द ।

ತಾಯಿಯಾದ ಸತ್ಯಾದೇವಿಯು ಉದ್ದವಾದ ಮುಂಗುರುಳುಗಳುಳ್ಳ ಮುಗ್ಧವಾದ ಮುಖಾರವಿಂದವುಳ್ಳ, ಆಡುತ್ತಾ ಧೂಳಿಯನ್ನು ಮೆತ್ತಿಕೊಂಡ ಅವಯವಗಳಿಂದ ಮನೋಹರನಾದ ನೂತನ ಕಮಲಗಳಂತೆ ಕೆಂಪಾದ ಕಣ್ಣಂಚುಳ್ಳ ಬಾಲಕನನ್ನು ಕಂಡು ಅತ್ಯಂತ ಸಂತೋಷಪಟ್ಟಳು.

**मुग्धेन बालस्य मुखोद्गतेन**
**माधुर्यधुर्येण सुभाषितेन ।**
**सुधा निरस्ता वसुधां विहाय**
**नाके विलीनेति जनो विजज्ञे ।।४४।।**

**मुग्धेनेति** । जनो लोकः । मुग्धेन अनभिव्यक्तवर्णेन । माधुर्यस्य धुर्येण धूर्वहेण । बालस्य मुखोद्गतेन सुभाषितेन निरस्ता सुधा वसुधां विहाय नाके स्वर्गे विलीना तिरोहितेति विजज्ञे विज्ञातवान् ।

ರಘುನಾಥನ ಕಲಭಾಷಣವನ್ನು ಆಲಿಸಿದ ಜನರು ಅನಭಿವ್ಯಕ್ತವರ್ಣಗಳುಳ್ಳ ಮಾಧುರ್ಯದಿಂದ ಶ್ರೇಷ್ಠವಾದ ಬಾಲಕನ ಮುಖದಿಂದ ಉದ್ಗತವಾದ ಸುಭಾಷಿತದಿಂದ ಅಮೃತವು ನಿರಾಕೃತವಾಗಿ ಸರ್ಗದಲ್ಲಿ ವಿಲೀನವಾಗಿದೆ ಎಂದು ತಿಳಿದರು.

**न केवलं तस्य शिशोर्मनोज्ञं रूपं सुवर्णोज्वलमाबभासे ।**
**क्रमेण काले सुधयापि सिक्तं सूक्तं सुवर्णोज्वलमाबभासे ।।४५।।**

**नेति** । मनोज्ञं मनोहरं तस्य शिशोः रूपं केवलं रूपमेव सुवर्णवदुज्वलं नाबभासे । क्रमेण काले सुधया सिक्तं सूक्तं सुभाषितमपि शोभनैर्वर्णैरुज्वलं आबभासे ।

ಶಿಶುವಿನ ಮನೋಹರವಾದ ರೂಪವಷ್ಟೇ ಸುವರ್ಣದಂತೆ ಉಜ್ವಲವಾಗಿ ಹೊಳೆಯುತ್ತಿರಲಿಲ್ಲ. ಕ್ರಮೇಣ ಅಮೃತಸಿಕ್ತವಾದ ಸುಭಾಷಿತವೂ ಸುವರ್ಣಗಳಿಂದ (ಶೋಭನವರ್ಣ-ಅಕ್ಷರಗಳು) ಉಜ್ವಲವಾಗಿ ಶೋಭಿಸಿತು.

**हाराभिरामोऽपि स बालको विहाराभिरामो नितरां बभूव ।**
**चिक्रीड लोकेऽप्रतिमोऽपि बालैः विचित्ररूपां प्रतिमां निधाय।।४६।।**

**हारेति** । स बालकः हारैः अभिरामोऽपि नितरां विहारैः क्रीडाभिः अभिरामो बभूव । हारविहारयोः विरोधस्य आभासत्वात् विरोधाभासः। लोके अप्रतिमोऽपि स बालकः विचित्ररूपां प्रतिमां प्रतिकृतिं, कृत्रिमपुत्रिकामिति यावत् । निधाय बालैः चिक्रीड क्रीडितवान् । अत्रापि प्रतिमाप्रतिमयोर्विरोधाभासो द्रष्टव्यः ।

ಹಾರದಿಂದ ಸುಂದರನಾದ ಬಾಲಕನು ವಿಹಾರದಿಂದಲೂ ಸುಂದರ. ಲೋಕದಲ್ಲಿ ಅಪ್ರತಿಮನಾದರೂ ಪ್ರತಿಮೆಯನ್ನು ಇಟ್ಟುಕೊಂಡು ಬಾಲಕರೊಡನೆ ವಿಹರಿಸಿದ.

**स शैशवं श्लाघ्यतमं व्यतीत्य**
**जज्ञे कुमारोऽभिनवः कुमारः ।**

**लीलाभिरानन्दितबान्धवाभिः**
**स शोभितोऽभूत् बहुशोऽभितश्च ।।४७।।**

**स इति** । अभिनवः नूतनः कोः भूमेः मारो मन्मथः स बालः श्लाघ्यतमं शैशवं बाल्यं "शिशुत्वं शैशवं बाल्यमि"त्यमरः । व्यतीत्य अतिक्रम्य । कुमारः कौमारावस्थापन्नो जज्ञे जातः । स कुमारः अभितः समन्तात् बहुशो बहुप्रकारं आनन्दिताः बान्धवाः याभिस्ताभिः। लीलाभिः क्रीडाभिः शोभितश्च अभूत् ।

ನೂತನಮನ್ಮಥನಂತೆ ಕಾಣುವ ಆ ಬಾಲಕನು ಶೈಶವವನ್ನು ದಾಟಿ ಕೌಮಾರಾವಸ್ಥೆಯಲ್ಲಿ ಕಾಲಿಟ್ಟನು. ತನ್ನ ಕ್ರೀಡೆಗಳಿಂದ ಬಂಧುಜನರನ್ನು ಅತ್ಯಂತ ಸಂತೋಷಗೊಳಿಸಿದನು.

**तेजः पिता तस्य समेधमानं**
**अमानुषीं वीक्ष्य स शेमुषीं च ।**
**ब्राह्म्या श्रिया योजयितुं तनूजं**
**कालं वसन्तं परिपाल्य तस्थौ ।।४८।।**

**तेज इति** । तस्य कुमारस्य पिता स पुरुषोत्तमाचार्यः समेधमानं तेजः प्रभावं, अमानुषीं शेमुषीं बुद्धिं च । "बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिरि" त्यमरः । वीक्ष्य । तनूजं पुत्रं ब्राह्म्या श्रिया ब्रह्मवर्चसेन योजयितुं संबन्धयितुं उपनेतुमित्यर्थः । वसन्तं कालं परिपाल्य प्रतीक्ष्य । तस्थौ स्थितवान् । "वसन्ते ब्राह्मणमुपनयीते" ति श्रुतेः ।

ಕುಮಾರನಾದ ರಘುನಾಥನ ತಂದೆಗಳಾದ ಶ್ರೀಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಬೆಳೆಯುವ ಮಗನ ತೇಜಸ್ಸು ಮತ್ತು ಅತಿಮಾನುಷವಾದ ಬುದ್ಧಿಯನ್ನು ನೋಡಿ, ಉಪನಯನವನ್ನು ಮಾಡಲು"ವಸಂತೇ ಬ್ರಾಹ್ಮಣಮುಪನಯೀತ" ಎಂದು ಶ್ರುತಿ ಇರುವದರಿಂದ ವಸಂತ ಕಾಲದ ಪ್ರತೀಕ್ಷೆಯನ್ನು ಮಾಡಿದರು.

**पुंस्कोकिलारावनिवेद्यमानो मन्दानिलांदोलिकयोह्यमानः ।**
**मनोजसम्राड्विजयानुकूलः कालस्ततः प्रादुरभूत् सलीलः।।४९।।**

**पुंस्कोकिलेति** । ततोऽनन्तरं पुंस्कोकिलानां आरावैः आलोकशब्दैः निवेद्यमानः विज्ञाप्यमानः । मन्दानिल एवान्दोलिका वाहनविशेषः । तया ऊह्यमानः ध्रियमाणः । मनोजः मन्मथ एव सम्राट् महाराजः तस्य

विजयस्य अनुकूलः । लीलाभिः सहितः सलीलः कालः वसन्तः प्रादुरभूत् । अत्र वसन्तधर्मैः वसन्तस्य प्राकट्यात् । प्रासादो नाम गुणः । यत्तु प्राकट्यमर्थस्य प्रासादः सोऽभिधीयत इति लक्षणात् ।

ಈಗ ವಸಂತ ಬರುವ ವೇಳೆ ಕೋಗಿಲೆಗಳು ಆತನ ಬರುವನ್ನು ತಮ್ಮ ಕೂಗಿನಿಂದ ವಿಜ್ಞಾಪಿಸುತ್ತಿವೆ. ಮಂದಮಾರುತ ಉಯ್ಯಾಲೆಯಾಗಿ ಆತನನ್ನು ಹೊತ್ತು ತರುತ್ತಿದ್ದಾನೆ. ಮನ್ಮಥಮಹಾರಾಜನ ವಿಜಯಕ್ಕಾಗಿ ನಡುಕಟ್ಟಿರುತ್ತಾನೆ ಆ ವಸಂತ. ಆನೇಕ ಲೀಲಾವಿಲಾಸಗಳಿಂದ ಈಗ ಪ್ರತ್ಯಕ್ಷಗೊಂಡಿದ್ದಾನೆ ಆ ವಸಂತ.

**मरन्दसंपूरितपुष्परेणुबद्धालवालाः सकलाः रसालाः ।**
**कषायकण्ठैः कलकण्ठगीतैरघोषयन् यत्र वसन्तलक्ष्मीम् ।।५०।।**

तं वसन्तं सप्तभिर्वर्णयति । **मरन्देति** । मरन्दैः पुष्परसैः संपूरितानि पुष्परेणुभिः परागैः बद्धानि आलवालानि मूले रचितजलाश्रयस्थानानि येषां ते तथोक्ताः । "स्यादालवालमावालमावाप"इत्यमरः । सकलाः रसालाः चूतवृक्षाः । "आम्रश्चूतो रसाल"इत्यमरः । यत्र काले कषायाः रक्ताः कंठाः येषु तैः । कलकण्ठानां कोकिलानां गीतैः वसन्तकीर्तिं अघोषयन् घोषयामासुः ।

ಆಗ ಪುಷ್ಪರೇಣುಗಳು ಉದುರಿ ನೆಲಕ್ಕೆ ಬಿದ್ದಿದ್ದವು. ಅವಗಳು ಮಾವಿನ ಮರಕ್ಕೆ ಪಾತಿಯಂತೆ ಇದ್ದವು. ಪುಷ್ಪರಸಗಳಿಂದ ಆ ಪಾತಿ ಪೂರ್ಣಗೊಂಡಿದ್ದವು. ಈ ರೀತಿ ಎಲ್ಲ ಮಾವಿನಮರಗಳು ಶೋಭಿಸುತ್ತಿದ್ದವು. ಅವುಗಳು ಕೆಂಪುಕಂಠದ ಕೊಗಿಲೆಗಳಿಂದ ವಸಂತನ ಕೀರ್ತಿಯನ್ನು ಉದ್ಘೋಷಣೆ ಮಾಡಿಸಿದವು.

**यं जातिहीनं समवाप्य लोकान् प्रबाधते केवलमङ्गहीनः ।**
**इत्यावलिर्दिक्षु मधुव्रतानामाक्रन्दनानीव रुतानि चक्रे ।।५१।।**

**यमिति** । अङ्गहीनः कामः जात्या मालत्या हीनं जात्या हीनं च कुलेन हीनम् । "सुमना मालती जातिरि"त्यमरः । यं कालं समवाप्य लोकान् प्रबाधते । केवलं निश्चिते । "निर्णीते केवलमि"त्यमरः । इति मधुव्रातानां भ्रमराणां आवलिः दिक्षु आक्रन्दनानि रोदनशब्दानिव रुतानि वाशितानि, शब्दानि । "तिरश्चां वासितं रुतमि"त्यमरः । चक्रे।

"ಅಂಗವಿಲ್ಲದವ(ಕಾಮನು) ಜಾತಿಪುಷ್ಪಗಳಿಲ್ಲದ ಕಾಲವನ್ನು ಹೊಂದಿ ಜನರನ್ನು ನಿಶ್ಚಿತವಾಗಿ ಬಾಧಿಸುತ್ತಾನೆ." ಎಂದು ಭ್ರಮರಗಳ ಸಾಲು ದಿಕ್ಕು-ಗಳಲ್ಲಿ ಆಕ್ರಂದನವನ್ನು ಮಾಡಿತು.

**यस्मिन् प्रवालोपचितेषु वृक्षेष्वन्तः प्रसूनोद्गम आबभासे ।**
**जगन्ति संतापयितुं स्मरेण वह्नाविवास्त्रं प्रणिधीयमानम् ।।५२।।**

**यस्मिन्निति** । यस्मिन् प्रवालैः पल्लवैः उपचितेषु अभिवृद्धेषु । तदानीं [1]रक्तवर्णेष्वित्यर्थः । वृक्षेषु अन्तः मध्ये जगन्ति संतापयितुं स्मरेण वह्नौ प्रणिधीयमानं अस्त्रमिव प्रसूनानां उद्गमः प्रादुर्भावः आबभासे । मन्मथस्य पुष्पास्त्रत्वादिति भावः ।

ಯಾವ ಕಾಲದಲ್ಲಿ ಪವಳದ ಚಿಗುರುಗಳಿಂದ ಅಭಿವೃದ್ಧವಾದ ವೃಕ್ಷದ ಮಧ್ಯದಲ್ಲಿ ಪುಷ್ಪಗಳ ಉದ್ಗಮವಾಗುತ್ತದೆ. ಅದು ಜಗತ್ತನ್ನು ಸಂತಾಪಗೊಳಿಸಲು ಮನ್ಮಥನು ಅಸ್ತ್ರವನ್ನು ಕಾಯಿಸಲು ಅಗ್ನಿಯಲ್ಲಿಡುವಂತೆ ಕಾಣುತ್ತದೆ. ಅನಂಗನು ಪುಷ್ಪಬಾಣನಲ್ಲವೇ.?

**वनान्तरुद्यन्मकरन्दबिन्दुचोरस्समीरो मलयाद्रिलीनः ।**
**गृहीतमुक्तो विचचार यस्मिन् पाटीरवाटीरतभोगियूथैः ।।५३।।**

**वनान्तरीति** । मलयाद्रौ लीनः । पाटीराणां चन्दनानां वाटीषु पङ्क्तिषु रतैः भोगिनां सर्पाणां यूथैः सङ्घैः। गृहीतमुक्तः पूर्वं गृहीतः पश्चात् मुक्तः। "पूर्वकालेति"(२.१.४९) समासः । सर्पपीतावशिष्ट इत्यर्थः । यत्र काले वनान्तः वनानां मध्ये उद्यतां उत्पन्नानां मकरन्दबिन्दूनां चोरः अपहारकः । समीरः विचचार । यथा कुत्रचित् पर्वतलीनः कैश्चित् गृहीतमुक्तोऽपि वा चोरः काले चौर्याय चरति । तथा वसन्तकाले समीरश्चरतीत्यर्थः ।

ಮಲಯಪರ್ವತದಲ್ಲಿ, ಮಾರುತನು ಮಕರಂದವನ್ನು ಅಪಹಾರ ಮಾಡಿದ ತಪ್ಪಿಗೆ ಆತನನ್ನು ಚಂದನವೃಕ್ಷಗಳ ಸಾಲುಗಳಲ್ಲಿರುವ ಸರ್ಪಗಳು ಮುಖಗಳಲ್ಲಿ ಸೆರೆಹಿಡಿದು ಸ್ವಲ್ಪಸಮಯದನಂತರ ಬಿಟ್ಟವು. ಆತನು ಈಗ ಮತ್ತೆ ಮಕರಂದ ಬಿಂದುಗಳನ್ನು ಅಪಹರಿಸಿ ವನದಲ್ಲಿ ಸಂಚರಿಸುತ್ತಿದ್ದಾನೆ.

**यस्मिन्नपि श्लाघ्यगुणप्रतीते समं द्वयं प्रादुरभूज्जगत्याम् ।**
**अन्तर्मनोजप्रभवोपतापो बहिश्च चंडांशुमयूखकोपः ।।५४।।**

१. रक्तवत्सवर्णेषु इति (कपुस्तके)

**यस्मिन्निति** । श्लाघ्यैर्गुणैः प्रतीते प्रसिद्धेऽपि यस्मिन् काले जगत्यां द्वयं समं युगपत् प्रादुरभूत् । किं तद्द्वयमित्यत आह । **अन्तरिति** । अन्तः मनोजेन मन्मथेन प्रभव उत्पन्नः उपतापः विरहतापः । बहिः चण्डांशोः सूर्यस्य मयूखानां कोपः प्रकोपश्च ।

ಶ್ಲಾಘ್ಯಗುಣಗಳಿಂದ ಪ್ರಸಿದ್ಧವಾದ ಈ ವಸಂತಮಾಸದಲ್ಲಿಯೂ ಜಗತ್ತಿಗೆ ಎರಡು ತಾಪಗಳಾಗುತ್ತವೆ. ಒಂದು ದೇಹದೊಳಗೆ ಮನ್ಮಥನ ಪ್ರತಾಪ, ಇನ್ನೊಂದು ಹೊರಗಡೆ ಸೂರ್ಯನ ಕಿರಣಗಳ ಪ್ರಕೋಪ.

**यत्र प्रसूनप्रभवाः परागाः दृशां पिधानं विदधुर्जनानाम् ।**
**जगद्वशीकारकृते विकीर्णाः संमोहचूर्णा इव मन्मथेन ।।५५।।**

**यत्रेति** । प्रसूनप्रभवाः पुष्पोद्गताः परागाः पुष्परेणवः जगतो वशीकारकृते वशीकरणप्रयोजनाय । मन्मथेन विकीर्णाः संमोहचूर्णाः इव जनानां दृशां लोचनानां विवेकानां च पिधानं छादनं विदधुः ।

ವಸಂತಕಾಲದಲ್ಲಿ ಪುಷ್ಪಗಳ ಪರಾಗರೇಣುಗಳು ಎಲ್ಲಡೆ ಹರಡಿರುತ್ತವೆ. ಇವು ಮನ್ಮಥನು ಜಗತ್ತನ್ನು ತನ್ನ ವಶದಲ್ಲಿ ತರಲು ಚೆಲ್ಲಿದ ಸಮ್ಮೋಹ ಚೂರ್ಣದಂತೆ ಎಲ್ಲರ ಕಣ್ಣುಗಳಿಗೆ, ವಿವೇಕಕ್ಕೆ ಮುಸುಕೆಳೆದಿವೆ.

**दोलाविहारोत्सुकपांथलोकं सञ्जातपुष्पप्रकरातिरेकम् ।**
**यस्मिन्नभूत् काननमस्तशोकं समाश्रितानां विरहिप्रतीकम् ।।५६।।**

**दोलेति** । दोलाविहारेषु उत्सुकाः पांथलोकाः पथिकजनाः यस्मिन् तत्तथोक्तम् । संजातः पुष्पप्रकराणां पुष्पसमूहानां अतिरेकः आधिक्यं यस्मिन् तत् तथोक्तम् । विरहिणां वियोगिनां प्रतीकं प्रतिकूलं, "प्रतिकूले प्रतीकः स्त्रिष्वि"त्यमरः। काननं वनं समाश्रितानां प्राणिना अस्तः शोकः आतपादिकृतः येन तथाभूतमासीत् । अस्तः समाश्रित-शोकमिति सापेक्षत्वेऽपि गमकत्वात् समासः ।

ಆಗ ಪಥಿಕರೆಲ್ಲ ಉಯ್ಯಾಲೆಯಲ್ಲಿ ವಿಹಾರಮಾಡಲು ಬಯಸುತ್ತಾರೆ. ಪುಷ್ಪಸಮೂಹಗಳು ಆಗ ಹೆಚ್ಚಾಗಿರುತ್ತವೆ. ವಿರಹಿಗಳಿಗೆ ಇದು ಬಹಳ ಪ್ರತಿ–ಕೂಲವಾದ ಕಾಲ. ಆದರೆ ವನಚಾರಿಗಳಿಗೆ ದುಃಖ ಕಳೆವ ಕಾಲವೂ ಹೌದು.

**संप्राप्तमालक्ष्य वसन्तकालं द्विजन्मतायोग्यदशं च बालम् ।**
**निधार्य कार्यं पुरुषोत्तमार्यो महं महान्तं मुहुरन्वतिष्ठत् ।।५७।।**

**संप्राप्तमिति** । पुरुषोत्तमाचार्यः संप्राप्तं वसन्तकालमालक्ष्य द्विजन्मतायाः ब्राह्मणत्वस्य योग्या दशा अवस्था यस्य तम् । बालं च आलक्ष्य कार्यं कर्तव्यं उपनयनं निर्धार्य निश्चित्य । महान्तं महं उत्सवं । "मह उद्धव उत्सव"इत्यमरः । मुहुः अन्वतिष्ठत् अनुष्ठितवान् ।

ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ವಸಂತಕಾಲ ಬಂದದ್ದನ್ನು ತಿಳಿದು. ಉಪನಯನಕ್ಕೆ ಯೋಗ್ಯವಾದ ಅವಸ್ಥೆಯಲ್ಲಿರುವ ಮಗನನ್ನು ಕಂಡು ಉಪನಯನ ಮಾಡುವದಾಗಿ ನಿರ್ಧರಿಸಿ, ದೊಡ್ಡ ಉತ್ಸವವನ್ನು ಕೈಗೊಂಡರು.

**महोत्सवव्यग्रसमग्रबन्धुपुरन्ध्रिजालां कृतरत्नमालाम् ।**
**शालां मणिस्तंभशतैर्विशालां सोऽचीकरद्दर्शितशिल्पिलीलाम् ।।**

**महोत्सवेति** । स पुरुषोत्तमाचार्यः । महोत्सवे व्यग्राणि समग्राणां समस्तानां बन्धूनां पुरंध्रीणां कुटुम्बिनीनां च जालानि यस्यां तां तथोक्ताम्। "स्यात्तु कुटुम्बिनी पुरन्ध्रिरि"त्यमरः । कृताः रत्नानां मालाः स्रजो यस्याः ताम् । मणिस्तंभशतैः दर्शिताः शिल्पिनां लीलाः चातुर्यक्रियाः यस्यां ताम् । "लीला विलासक्रिययोरि"त्यमरः । विशालां शालां सभां शोभनमन्टपमित्यर्थः । अचीकरत् कारयामास ।।५८।।

ಆ ಉತ್ಸವದಲ್ಲಿ ಎಲ್ಲ ಬಂಧುಗಳ ಕುಟುಂಬಿನೀಯರ ಸಮೂಹವು ತಮ್ಮ ತಮ್ಮ ಕಾರ್ಯಗಳಲ್ಲಿ ನಿರತರಾಗಿದ್ದರು. ಈ ಉತ್ಸವಕ್ಕಾಗಿ ಒಂದು ಮಂಟಪವೇ ನಿರ್ಮಾಣಗೊಂಡಿತ್ತು. ಆ ವಿಶಾಲವಾದ ಮಂಟಪದಲ್ಲಿ ಅಲ್ಲಲ್ಲಿ ರತ್ನಗಳ ಹಾರಗಳನ್ನು ತೂಗುಬಿಟ್ಟಿದ್ದಾರೆ. ನೂರಾರು ಮಣಿಗಳ ಸ್ತಂಭಗಳು ಶಿಲ್ಪಿಗಳ ಚಾತುರ್ಯವನ್ನು ತೋರಿಸುತ್ತಿವೆ.

**विद्यासदाचारतपोनिसर्गान् दिग्भ्यः समानीय स बन्धुवर्गान् ।**
**श्रियो महत्याश्च वदान्यतायाः समं सुतस्याभ्युदयं वितेने ।।५९।।**

**विद्येति** । स पुरुषोत्तमाचार्यः । विद्यासदाचारतपांस्येव निसर्गः स्वभावो येषां तान् । बन्धुवर्गान् दिग्भ्यः नानादेशेभ्यः समानीय । महत्याः श्रियः संपदो वदान्यतायाः दातृतायाश्च । समं सदृशं यथा भवति तथा सुतस्य अभ्युदयं आभ्युदयकं कर्म वितेने ।

ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಈ ಕಾರ್ಯಕ್ರಮದಲ್ಲಿ ಒಳ್ಳೆ ವಿದ್ಯಾ, ಸದಾಚಾರ, ತಪಸ್ಸು ಇವೇ ಸ್ವಭಾವವಾಗಿವುಳ್ಳ ಬಂಧುವರ್ಗದವರನ್ನು,

ನಾನಾದೇಶಗಳಿಂದ ಕರೆಯಿಸಿ, ತಮ್ಮ ಸಂಪತ್ತಿಗೂ ದಾತೃತ್ವಕ್ಕೂ ತಕ್ಕಂತೆ ಮಗನ ಅಭ್ಯುದಯಕರ್ಮವನ್ನು ಆಚರಿಸಿದರು.

**अन्नैः प्रसन्नैः स गुणोपपन्नैर्विलक्षणाभिर्बहुदक्षिणाभिः ।**
**भूषादुकूलैरपि चातिवेलैरतर्पयत्पंडितमंडलानि ।।६०।।**

**अन्नैरिति** । गुणैः घृतसूपदध्यादिभिः उपपन्नैः संपन्नैः । प्रसन्नैः परिशुद्धैः अन्नैः। विलक्षणाभिः, बहुदक्षिणाभिः नानाविधाभिः दक्षिणाभिः। अतिवेलैः अमितैः भूषाभिः दुकूलैरपि च पंडितमंडलानि अतर्पयत् प्रीणयामास ।

ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ನೆರದಿರುವ ಪಂಡಿತಮಂಡಳಿಯನ್ನು ಘೃತಸೂಪದಧ್ಯಾದಿಗಳಿಂದ ಕೂಡಿದ, ಪರಿಶುದ್ಧವಾದ ಭೋಜನಗಳಿಂದ ವಿಲಕ್ಷಣವಾದ ಬಹುದಕ್ಷಿಣೆಗಳಿಂದ ಅನೇಕ ಭೂಷಣಗಳಿಂದ, ಒಳ್ಳೆ ವಸ್ತ್ರ-ಗಳಿಂದಲೂ ಸಂತೋಷಪಡಿಸಿದರು.

**कंपप्लुतावग्रहसंहितासु स्वप्रातिशाख्यानुगुणं गृणन्तः ।**
**तदा प्रतिष्ठां क्रमका विवव्रुरुद्घोषयन्तः प्रतिवेदिदोषान् ।।६१।।**

**कंपेति** । तदा उपनयनसमये । कंपो नाम दीर्घश्रुतिविशेषः । प्लुतः त्रिमात्रः । अवग्रहः छेदः । संहिता वर्णानां सन्निकर्षः । तासु स्वस्य प्रातिशाख्यस्य प्रतिशाखं नियतस्य व्याकरणस्य अनुगुणं अनुसारं गृणन्तः व्यवहरन्तः । प्रतिवेदिनां विपक्षवेदपाठकानाम् दोषान् उद्घोष-यन्तः प्रकाशयन्तः क्रमकाः क्रमाध्येतारः । क्रमादिभ्यः (४.२.६१) इति उन् । प्रतिष्ठां आत्मश्रेष्ठ्यं विवव्रुः प्रकाशयामासुः ।

ಉಪನಯನ ಸಮಯದಲ್ಲಿ ಕ್ರಮಾಂತ ಅಧ್ಯಯನ ಮಾಡಿದ ವೇದ-ಪಂಡಿತರು, ಕಂಪ(ದೀರ್ಘಶ್ರುತಿ), ಪ್ಲುತ (ಮೂರುಮಾತ್ರಾಕಾಲ) ಅವಗ್ರಹ (ಛೇದ), ಸಂಹಿತಾ (ವರ್ಣಗಳ ಸನ್ನಿಕರ್ಷ) ಇತ್ಯಾದಿಸ್ಥಳಗಳಲ್ಲಿ ತಮ್ಮ ತಮ್ಮ ಪ್ರಾತಿಶಾಖ್ಯ (ವ್ಯಾಕರಣಗ್ರಂಥ)ಕ್ಕೆ ಅನುಗುಣವಾಗಿ ಉಚ್ಚಾರ ಮಾಡುವವ-ರಾಗಿ, ವಿಪಕ್ಷವೇದಪಾಠಕರ, ಶಬ್ದದೋಷಗಳನ್ನು ಉದ್ಘೋಷಿಸುತ್ತಾ ತಮ್ಮ ಶ್ರೇಷ್ಠತ್ವವನ್ನು ವ್ಯಕ್ತಗೊಳಿಸಿಕೊಂಡರು.

**प्रत्यग्रविद्बद्भटनिग्रहोग्रदुराग्रहोद्भावितवक्रतर्काः ।**
**मुखामुखी प्रोद्धतवादभेदानारेभिरे संसदि वावदूकाः ।।६२।।**

**प्रत्यग्रेति** । अत्रापि तदेत्यनुषज्यते । संसदि सभायाम् । मुखामुखी मुखेन मुखेन प्रवृत्ते युद्धे । तत्र तेनेदमिति सरूपमिति (२.२.२७) समासः । कर्मव्यतिहार इति समासान्तः । कर्मव्यतिहारे पूर्वपदस्य दीर्घत्वम् । कलहहेतुत्वात् । मुख्यस्य प्रहरणत्वम् । प्रत्यग्राणां नूतनानाम् विद्वद्भटानां पंडितशूराणां निग्रहे पराजये उग्रेण रौद्रेण दुराग्रहेण उद्गारिताः (उद्भाविताः) वक्राः तर्काः यैस्ते । वावदूकाः वक्तारः । "वावदूकस्तु वक्तरि"त्यमरः । प्रोद्धतान् उद्दंडान् वादभेदान् जल्पवितंडरूपान् आरेभिरे आरब्धवन्तः ।

ಆ ಸಭಾಮಟಪದಲ್ಲಿ ಮುಖಾಮುಖ ನಡೆದ ವಾಗ್ಯುದ್ಧದಲ್ಲಿ ನೂತನ ಪಂಡಿತಶ್ರೇಷ್ಠರನ್ನು ಪರಾಜಯಗೊಳಿಸಲು ಉಗ್ರವಾದ ದುರಾಗ್ರಹದಿಂದ ವಕ್ರವಾದ ತರ್ಕಗಳನ್ನು ಉಪಯೋಗಿಸುತ್ತಾ ವಕ್ತಾರರು ಉದ್ದಂಡವಾದ ವಾದಜಲ್ಪವಿತಂಡರೂಪವಾದ ವಾಕ್ಯಾರ್ಥವನ್ನು ಆರಂಭಿಸಿದರು.

**प्रपञ्चयन्तो बहुधा विपञ्च्यां स्वरान् निषादप्रभृतीन् सरागान् ।**
**जगुश्च गीतं सलयं सतालं तदा मुहुर्वैणिकसार्वभौमाः ।।६३।।**

**प्रपञ्चयन्त इति** । तदा तस्मिन् काले विपञ्च्यां वीणायां "[1]वीणा तु वल्लकी विपञ्ची"त्यमरः । निषादप्रभृतीन् । निषादर्षभगन्धर्वषड्जमध्यमधैवताः । पंञ्चमश्चेत्यमी सप्त तंत्रीकण्ठोत्थिता स्वराः । रागेण सहितान् सरागान् । रागोनाम स्वरविशेषानुगतो रंजको जातिभेदः । स्वरान् श्रुतिसमुदाय रूपध्वनिविशेषान् । बहुधा गान्धारादिग्रामेषु आरोहणादि बहुप्रकारैः प्रपञ्चयन्तो विस्तारयन्तः । वैणिकसार्वभौमाः वीणावाद श्रेष्ठाः । "वीणावादास्तुवैणिकाः"इत्यमरः । तालेन सहितं सतालम् । तालोनाम कालक्रिययोर्मानम् । "तालः कालक्रियामानमि"त्यमरः । लयेन सहितं सलयम् । लयो नाम तयोः साम्यं । "लयः सामयमथास्त्रियः" इत्यमरः । गीतं गेयविशेषं जगुश्च । स्वरादीनां तु लक्षणानि अभिनवगुप्तादिभिः प्रपञ्चितानि द्रष्टव्यानि विस्तरभयात् नास्माभिर्लिख्यन्ते ।

ಆ ಕಾಲದಲ್ಲಿ ಸಪ್ತಸ್ವರಗಳಲ್ಲಿ ಅನೇಕ ರಾಗಗಳಲ್ಲಿ ಲಯಬದ್ಧವಾಗಿ ತಾಲಬದ್ಧವಾಗಿ ವೀಣೆಯನ್ನು ಕೆಲವರು ವೈಣಿಕರು ನುಡಿಸಿದರು ಕೆಲವರು ಗೀತೆಗಳನ್ನು ಹಾಡಿದರು.

१. विपंची वल्लरीवीणा ।

**दैवज्ञपौराणिकबन्दिवृन्द प्रादुष्कृतप्राग्रहरप्रशस्तिः ।**
**मुदोपनिन्ये तनयं नयज्ञो लग्ने प्रशस्ते पुरुषोत्तमार्यः ।।६४।।**

**दैवज्ञेति** । नयज्ञः शास्त्रज्ञः । दैवज्ञानां ज्योतिषिकानां पौराणिकानां बन्दिनां स्तुतिपाठकानां च वृन्देन समूहेन प्रादुष्कृता प्रकाशीकृता । प्राग्रहरा उत्तमा प्रशस्तिः प्रशंसा यस्य स तथोक्तः । "पराग्र्याग्र्यप्राग्रहर-प्राग्र्याग्र्याग्रीयमग्रियम्"इत्यमरः । पुरुषोत्तमाचार्यः प्रशस्ते लग्ने मुदा तनयं पुत्रं उपनिन्ये उपनीतवान् । "संमानोत्संजनाचार्य करणे" ति (१.३.३६) आचार्यकरणेर्थे नयतेरात्मने पदम् ।

ಶಾಸ್ತ್ರಜ್ಞರಾದ ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಜ್ಯೋತಿಷಿಗಳು ಪೌರಾಣಿಕ-ರು, ಸ್ತುತಿ ಪಾಠಕರು, ಇವರು ಸಮೂಹವು ಶ್ರೇಷ್ಠವೆಂದು ಮುಹೂರ್ತದಲ್ಲಿ ಸಂತೋಷದಿಂದ ಮಗನ ಉಪನಯನವನ್ನು ಮಾಡಿದರು.

**तेनोपनीतं नितरां चकाशे सूनोः स्वभावोज्वलमेव रूपम् ।**
**निसर्गसंसिद्धसमृद्धरोचिः शाणेन माणिक्यमिवाभिमृष्टम् ।।६५।।**

**तेनेति** । स्वभवेन उज्वलम् ।तेन पित्रा उपनीतं सूनोः पुत्रस्य रूपं। निसर्गेण स्वभावेन संसिद्धं समृद्धं रोचिः दीप्तिः यस्य तथोक्तं शाणेन निकषेण । "शाणस्तु निकषः कषा"इत्यमरः । अभिमृष्टं उत्तेजितं माणिक्यमिव नितरां चकाशे ।

ನಿಸರ್ಗದಿಂದಲೇ ಒಳ್ಳಯ ಕಾಂತಿಯುಳ್ಳ ಮಣಿಯು ಶಾಣೆಯಿಂದ ಮತ್ತಷ್ಟು ಕಾಂತಿಯುತವಾಗುವಂತೆ ಉಪನಯನದಿಂದ ಮಗನ ಸ್ವಾಭಾವಿಕ-ವಾಗಿ ಉಜ್ವಲವಾದ ರೂಪವು, ಇನ್ನಷ್ಟು ಪ್ರಕಾಶಮಾನವಾಯಿತು.

**इत्थं सुतस्य महनीयगुणाद्भुतस्य मौञ्जीनिबन्धनमहं कलयन्महात्मा।**
**विद्वज्जनाहितधनः पुरुषोत्तमार्यो रेजे स तेन विधुनेव महाम्बुराशिः।।**

**इत्थमिति** । विद्वज्जनेषु आहितं निहितं धनं येन स तथोक्तः । महनीय-गुणैरद्भुतस्य । मौञ्जीनिबन्धनमेव महः उत्सवः तम् । इत्थं कलयन् कुर्वन् महात्मा पुरुषोत्तमाचार्यः विधुना चन्द्रेण महांबुराशिरिव तेन सुतेन रेजे ।

ಈ ರೀತಿ ಪಂಡಿತರಿಗೆ ಯಥೇಚ್ಛ ಧನವನ್ನು ಕೊಟ್ಟು. ಪೂಜ್ಯಗಣಗಳಿಂದ ಶ್ರೇಷ್ಠನಾದ ಮಗನ ಉಪನಯನವನ್ನು ಮಾಡಿ, ಮಹಾತ್ಮರಾದ ಪುರುಷೋ-ತ್ತಮಾಚಾರ್ಯರು ಚಂದ್ರನಿಂದ ಸಾಗರದಂತೆ ಮಗನಿಂದ ಶೋಭಿಸಿದರು.

**गुणगणमणिसिंधोस्तोषिताशेषबन्धोः**
**क्षितिसुरवरसूनोः तेजसा चंडभानोः ।**
**अवनिसुरपयोदा लब्धपूजांबुपूरा**
**ववृषुरनिरतं तत् कीर्तिवृष्टिं जगत्याम् ।।६७।।**

**गुणेति** । गुणगणा एव मणयः तेषां सिन्धोः समुद्रात् । तोषिताः अशेषबन्धवो येन स तथाभूतः तस्मात् । तेजसा प्रकाशेन चंडभानोः सूर्यात् । क्षितिसुरवरस्य ब्राह्मणोत्तमस्य सूनोः पुत्रात् सकाशात् लब्धा पूजा बहुमान एव अम्बुपूरो यैः ते । अवनिसुराः ब्राह्मणा एव पयोदाः मेघाः । जगत्यां तस्य बालस्य कीर्तिरूपां वृष्टिं अनिरतं ववृषुः । वृष सेचन इति धातुः । लोके मेघाः समुद्रात् सूर्याच्च लब्धाम्बुपूराः सन्तः कदाचिदेव वर्षंति इति प्रसिद्धिः । ब्राह्मणरूपाः मेघास्तु सदा ववृषुरित्यातिशयोक्तिरूपकानुप्राणितेति द्रष्टव्यम् ।

(ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಗುಣಗಣಮಣಿವುಳ್ಳ ಸಾಗರ ಅವರು ಎಲ್ಲ ಬಂಧುಗಳನ್ನು ಸಂತೋಷಬಡಿಸಿದರು. ರಘುನಾಥನೇ (ಮಗನೆ) ಸೂರ್ಯನಂತಿದ್ದಾನೆ ಬ್ರಾಹ್ಮಣರೇ ಮೇಘಗಳು. ಅವರು ಸ್ವೀಕರಿಸುವ ಪೂಜೆಯೇ ನೀರು. ಮಳೆಯೇ ಕೀರ್ತಿಯನ್ನು ಸಾರುವುದು). ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರೆಂಬ ಸಾಗರದಿಂದ ರಘುನಾಥನೆಂಬ ಸೂರ್ಯನದಶೆಯಿಂದ ಬ್ರಾಹ್ಮಣಮೇಘಗಳು ಪೂಜಾ ಜಲವನ್ನು ಸ್ವೀಕರಿಸಿ ಲೋಕದಲ್ಲಿ ಸದಾ ಕೀರ್ತಿ ವೃಷ್ಟಿಯನ್ನು ಸುರಿಸಿದರು. ಪ್ರಸಿದ್ಧಮೇಘಗಳು ಸಾಗರದಿಂದ ಸೂರ್ಯನಿಂದ ನೀರನ್ನು ಸ್ವೀಕರಿಸಿ ಒಮ್ಮೆ ಮಳೆಗೈದರೆ ವಿಪ್ರರು ಸದಾಕೀರ್ತಿಯ ಮಳೆಗೈದರು ಎಂಬುವದು ವಿಶೇಷ.

**सद्विद्यागुरुसत्यनाथयतिराट्श्रीपादसंसेवन-**
**प्रोद्यत्पण्डितराजशब्दबिरुदो यः श्रीनिवासः कविः ।**
**तस्य श्रीरघुनाथकीर्तनसुधास्वादैकवृत्तेः कृतौ**
**काव्ये सत्यनिधीयचारुचरिते सर्गः चतुर्थोऽभवत् ।।६८।।**

**। इति श्रीसत्यनिधिविलासे महाकाव्ये चतुर्थः सर्गः ।**

**सद्विद्येति** व्याख्यातमेतत् ।

**श्री सत्यनाथतीर्थश्रीचरणचरणाराधक-**
**लक्ष्मीश्वरनरसिंहकृतायां सत्यनिधिविलासाटीकायां**
**सर्वतोविसाख्यायां चतुर्थः सर्गः ।।४।।**

ನಾಲ್ಕನೇ ಸರ್ಗವು ಪೂರ್ಣವಾಯಿತು.

## -: पञ्चमः सर्गः :-

**वेदशास्त्रमधिगन्तुमुदारं तं वटुं पुटुधियं प्रसमीक्ष्य ।**
**बालकैर्गुरुकुले सह कैश्चित् सोऽध्यवासयत विप्रवरेण्यः ।।१।।**

**वेदेति** । विप्रवरेण्यः ब्राह्मणश्रेष्टः स पुरुषोत्तमाचार्यः वेदाश्च शास्त्राणि समाहृतानि वेदशास्त्रं द्वन्द्वैकवद्भावः। तत् अधिगन्तुं अध्येतुम्। पटुधियम् । उदारं महान्तम् । तं रघुनाथनामानम् । वटुं पुत्रम् । प्रसमीक्ष्य कैश्चित् बालकैः सह । गुरुकुले अध्यवासयत आवासं कारयामास । वसतेरकर्मकत्वेन गतिबुद्धीत्यादिना(१.४.५२) अणिकर्तुः कर्मत्वम् । अस्मिन् सर्गे स्वागतावृत्तम् । "स्वागतेतिरनभात् गुरुयुग्म" मिति लक्षणात् ।

ಬ್ರಾಹ್ಮಣಶ್ರೇಷ್ಠರಾದ ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ವೇದಶಾಸ್ತ್ರಗಳನ್ನು ಅಧ್ಯಯನ ಮಾಡಲು ನಿಪುಣನಾದ ಉತ್ಕೃಷ್ಟನಾದ ರಘುನಾಥಾಚಾರ್ಯ-ನೆಂಬ ಬ್ರಹ್ಮಚಾರಿ(ಮಗನಿ)ಗೆ ಕೆಲವು ಬಾಲಕರೊಂದಿಗೆ ಗುರುಕುಲವಾಸವನ್ನು ಮಾಡಿಸಿದರು.

**बालकोऽपि वयसा स गुरुणां विस्मयं विरचयन् सहलीलम् ।**
**अग्रहीष्ट सकलानपि वेदानीश्वरेषु न वयो हि निदानम् ।।२।।**

**बालक इति** । वयसा बालकोऽपि रघुनाथार्यः गुरूणां विस्मयं आश्चर्यम् विरचयन् जनयन् । सकलानपि वेदान् । लीलया सहितं यथा भवति तथा सहलीलम् ।अग्रहीष्ट अधीतवान् । बालकस्य सकलवेदग्रहणं कथमिति आशङ्क्याह । **ईश्वरेष्विति** । ईश्वरेषु समर्थेषु । वयः कार्येष्विति शेषः । न निदानं न आदिकारणं हि । "निदानन्त्वादिकारणमि"त्यमरः ।

ರಘುನಾಥನು ವಯಸ್ಸಿನಲ್ಲಿ ಚಿಕ್ಕವನಾದರೂ ಗುರುಗಳಿಗೆ ಆಶ್ಚರ್ಯವ-ನ್ನುಂಟು ಮಾಡುತ್ತಾ ಲೀಲೆಯಿಂದ ಎಲ್ಲ ವೇದಗಳನ್ನೂ ಅಧ್ಯಯನ ಮಾಡಿ-ದನು. ಸಮರ್ಥರಾದ ಮಹಾತ್ಮರಿಗೆ ವಯಸ್ಸು ಪ್ರತಿಬಂಧಕವಾಗುವದಿಲ್ಲ.

**लब्धविद्यमनवद्यगुणाढ्यं पुत्रमङ्कमधिरोप्य पिता तम् ।**
**अभ्यषिञ्चत जलैर्नयनोत्थैः प्राप्तराज्यमिव वैदिकलक्ष्म्या ।।३।।**

**लब्धेति** । पिता पुरुषोत्तमाचार्यः । अनवद्यैः निर्दुष्टैः गुणैराढ्यं सम्पन्नम् । लब्धा विद्या येन तं तथोक्तम् । तं रघुनाथनामानं पुत्रम् । अङ्कं अधिरोप्य । वैदिकया लक्ष्म्या प्राप्तं राज्यं साम्राज्यं येन तत् तथोक्तमिव । नयनोत्थैः जलैः आनन्दबाष्पैः इति भावः । अभ्यषिञ्चत अभिषिक्तवान् ।

ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಸದ್ಗುಣಸಂಪನ್ನರಾದ, ವಿದ್ಯಾವಂತರಾದ, ರಘುನಾಥಾಚಾರ್ಯರನ್ನು ತೊಡೆಯಲ್ಲಿ ಕೂಡಿಸಿಕೊಂಡು ವೈದಿಕಮಂತ್ರ-ಗಳಿಂದ ರಾಜ್ಯವನ್ನು ಹೊಂದಿದ ರಾಜನನ್ನು ಅಭಿಷೇಕ ಮಾಡುವಂತೆ ಆನಂದ ಬಾಷ್ಪಗಳಿಂದ ಅಭಿಷೇಕಮಾಡಿದರು.

**बालकेन समधीतषडङ्गेनाश्रवेण पुरुषोत्तमवर्यः ।**
**वासुदेवविदुषोऽखिलवेत्तुर्गौरवं समतनोदधिशास्त्रम् ।।४।।**

**बालकेनेति** । पुरुषोत्तमाचार्यः समधीतानि षट् अङ्गानि शिक्षादीनि येन तथाभूतेन । आश्रवेण स्ववचनग्राहिणा "वचने स्थित आश्रव" इत्यमरः । बालकेन शिष्येण अधिशास्त्रं शास्त्रेषु विषये । विभक्त्यर्थेऽ-व्ययीभावः । अखिलवेत्तुः वासुदेवविदुषः कुम्भारिवासुदेवाचार्यनाम्नः । गौरवं गुरुत्वं उपाध्यायत्वमिति भावः । इत्थंभावे तृतीया । समतनोत् कृतवान् इत्यर्थः ।

ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಶಿಕ್ಷಾದಿ ಷಡಂಗಗಳನ್ನು ಅಧ್ಯಯನಮಾಡಿದ, ತಮ್ಮ ಮಾತಿನಂತೆ ನಡೆಯುವ ಮಗನನ್ನು ಶಾಸ್ತ್ರಾಧ್ಯಯನಕ್ಕಾಗಿ "ಕುಂಭಾರೀ ವಾಸುದೇವಾಚಾರ್ಯ"ರೆಂಬ ಶಾಸ್ತ್ರಜ್ಞರಲ್ಲಿ ಕಳುಹಿಸಿದರು.

**सर्पराजमुखराजिविनिर्यद्भाष्यमुन्मथितवार्तिकसूत्रम् ।**
**सोऽन्तरङ्गपरकृत्रिमनित्यन्यायदन्तुरमशेषमपाठीत् ।।५।।**

**सर्पेति** । स बालकः सर्पराजस्य शेषस्य मुखानां राजेः विनिर्यत् उत्पन्नम् । उन्मथितानि प्रायेण प्रत्याख्यातानि वार्तिकानि सूत्राणि च यस्मिन् तत् तथोक्तम् । अन्तरङ्गपरकृत्रिमनित्यन्यायैः ।"असिद्धं बहिरङ्गमन्तरङ्गे"। "विप्रतिषेधे परं कार्यं" । कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययः" । "नित्यानित्ययोः नित्ये कार्यसम्प्रत्ययः" इति सूत्रपरिभाषाभिः प्रबलतया व्युत्पादितैरित्यर्थः । दन्तुरं गहनम् । भाष्यं महाभाष्यं अशेषं कृत्स्नं अपा-ठीत् पठितवान् । अशेषमित्यत्र विरोधाभासो द्रष्टव्यः ।

ವ್ಯಾಕರಣ ಮಹಾಭಾಷ್ಯವನ್ನು ಬರೆದ ಪತಂಜಲಿಮಹಾಮುನಿಗಳು, ಶೇಷಾವತಾರರೆಂದು ಪ್ರಸಿದ್ಧಿ. ಇದರಲ್ಲಿ ಅನೇಕ ಸೂತ್ರಗಳು ವಾರ್ತಿಕಗಳು ನಿರಾಕರಣಮಾಡಲ್ಪಟ್ಟಿವೆ. "ಅಸಿದ್ಧಂ ಬಹಿರಂಗಮಂತರಂಗೇ" ಅಂತರಂಗ–ಕಾರ್ಯ ಮಾಡುವಾಗ ಬಹಿರಂಗ ಸೂತ್ರವು ಅಸಿದ್ಧ. "ಅಲ್ಪಾಪೇಕ್ಷಂ ಅಂತರಂಗಂ" "ಬಹ್ವಪೇಕ್ಷಂ ಬಹಿರಂಗಂ" ವಿಪ್ರತಿಷೇಧೆ ಪರಂ ಕಾರ್ಯಂ" ಸಮಾನಬಲವಿರೋಧವಿರುವಾಗ ಪರಸೂತ್ರದ ಕಾರ್ಯವನ್ನು ಮಾಡಬೇಕು. "ಕೃತ್ರಿಮಾಕೃತ್ರಿಮಯೋಃಕೃತ್ರಿಮೇ ಕಾರ್ಯಸಂಪ್ರತ್ಯಯಃ" "ನಿತ್ಯಾನಿತ್ಯಯೋಃ ನಿತ್ಯೇ ಕಾರ್ಯಸಂಪ್ರತ್ಯಯಃ" ನಿತ್ಯಾನಿತ್ಯಗಳಲ್ಲಿ ನಿತ್ಯಸೂತ್ರದಕಾರ್ಯವನ್ನೆ ಮಾಡಬೇಕು. ಇತ್ಯಾದಿ ಸೂತ್ರ ಪರಿಭಾಷೆಗಳಿಂದ ಪ್ರಬಲವಾಗಿ ವ್ಯುತ್ಪಾದಿತ–ವಾದ ಮತ್ತು ಗಹನವಾದ ಮಹಾಭಾಷ್ಯವನ್ನು ಸಂಪೂರ್ಣವಾಗಿ ಬಾಲಕರಾದ ರಘುನಾಥಾಚಾರ್ಯರು ಅಧ್ಯಯನ ಮಾಡಿದರು.

**सोपदेशमतिदेशविशेषं शेषबाधविषयं स सभाष्यम् ।**
**लीलया नयसहस्रसमृद्धं पूर्वतन्त्रमपि शीलयते स्म ।।६।।**

**सोपदेशमिति** । स बालकः । उपदेशेन विधिवाक्येन सहितं सोपदेशं । तद्विचाराय प्रवृत्तम् । अतिदेशः अन्यत्र विहितस्य धर्मस्य अन्यत्र प्रापणमेव विशेषो यस्य तत्तथोक्तम् । पूर्वोत्तरषट्काभ्यां उपदेशातिदेशविचारस्य कृतत्वादिति भावः । शेषः परार्थः बाधः निवृत्तिश्च विषयौ विचार्यत्वेन स्थितौ यस्मिन् तत्तथोक्तम् । पूर्वषट्के शेषविचारस्य उत्तरषट्के बाधविचारस्य बहुधा कृतत्वात् प्राधान्येन तयोः विषयत्वमिति भावः । नयानामधिकरणानां सहस्रेण समृद्धं संपूर्णं भाष्येण शास्त्रेण सह वर्तमानं पूर्वतन्त्रं कर्ममीमांसाशास्त्रमपि लीलया शीलयते स्म परिशीलितवान् । अभ्यस्तवानित्यर्थः ।

ಪೂರ್ವಮೀಮಾಂಸಾಶಾಸ್ತ್ರವು ೧೨ ಅಧ್ಯಾಯಾತ್ಮಕವಾಗಿದೆ. ಒಂದು ಸಾವಿರ ಅಧಿಕರಣಗಳು. ಒಟ್ಟು ೨೭೦೦ ಸೂತ್ರಗಳು. ಮೊದಲನೇ ೬ ಅಧ್ಯಾ–ಯಗಳಿಗೆ ಪೂರ್ವಷಟ್ಕವೆಂದು ಮುಂದಿನ ಆರು ಅಧ್ಯಾಯಗಳಿಗೆ ಉತ್ತರ ಷಟ್ಕ ಎಂದು ಹೇಳುತ್ತಾರೆ. ಪೂರ್ವಷಟ್ಕದಲ್ಲಿ ಉಪದೇಶ(ವಿಧಿವಾಕ್ಯವಿಚಾರ) ನಡೆದಿದೆ. ಉತ್ತರ ಷಟ್ಕದಲ್ಲಿ ಅತಿದೇಶ (ಅನ್ಯತ್ರ ವಿಹಿತವಾದ ಧರ್ಮವನ್ನು ಅನ್ಯತ್ರ ಪ್ರಾಪಣದ) ವಿಚಾರಮಾಡಿದ್ದಾರೆ. ಪೂರ್ವಷಟ್ಕಕ್ಕೆ ಶೇಷವೆಂದು ಉತ್ತರ ಷಟ್ಕದಲ್ಲಿ ಬಾಧವಿಚಾರವನ್ನು ಮಾಡಿದ್ದರಿಂದ ಉತ್ತರಷಟ್ಕಕ್ಕೆ

ಬಾಧವೆಂದು ಕರೆಯುತ್ತಾರೆ. ಆ ಸೂತ್ರಗಳಿಗೆ ಶಬರನ ಭಾಷ್ಯವಿದೆ. ಆ ಭಾಷ್ಯದಿಂದ ಸಹಿತವಾದ ಕರ್ಮಮೀಮಾಂಸಾಶಾಸ್ತ್ರವನ್ನು ಸಂಪೂರ್ಣವಾಗಿ ರಘುನಾಥಾಚಾರ್ಯರು ಅಧ್ಯಯನ ಮಾಡಿದರು.

**पक्षिलाक्षचरणादिमुखोद्यद्युक्तिजालजटिलं कुटिलं सः ।**
**शिक्षयन्निव विचक्षणबुद्धिः न्यायदर्शनमशिक्षत रूक्षम् ।।७।।**

**पक्षिलेति** । विचक्षणबुद्धिः स रघुनाथार्यः । पक्षिलाक्षचरणौ आदी येषाम् । आदिपदेन उदयनादीनां परिग्रहः । मुखेभ्यः उद्यद्भिः युक्तिजालैः जटिलं परस्परसङ्कीर्णम् । अत एव कुटिलं वक्रं रूक्षं उग्रमित्यर्थः । न्यायदर्शनं तर्कशास्त्रं शिक्षयन् खण्डयन् इव अशिक्षत शिक्षितवान् ।

ವಿಚಕ್ಷಣರಾದ ರಘುನಾಥಾಚಾರ್ಯರು ಪಕ್ಷಿಲ, ಅಕ್ಷಪಾದ, ಉದಯನ ಮುಂತಾದವರ ಜಟಿಲವಾದ ಯುಕ್ತಿಗಳಿಂದ ಕಠಿಣವಾದ ನ್ಯಾಯಶಾಸ್ತ್ರವನ್ನು ಖಂಡಿಸುವವರಂತೆ ಅಧ್ಯಯನ ಮಾಡಿದರು.

**विष्णुवैभवमहामणिराशेर्न्यायवीचिनिचयोपचितस्य ।**
**मध्वशास्त्रजलधेर्मतिनावा पारमाप परमार्थनयज्ञः ।।८।।**

**विष्णिवति** । परमार्थनयज्ञः परमार्थानां अबाधितानां नयानां शास्त्राणां ज्ञो अभिज्ञः । रघुनाथार्यः मतिरेव नौः तया । विष्णोर्वैभवं महिमैव महामणीनां राशिर्यस्मिन् स तथोक्तः तस्य । न्याया एव वीचीनां तरङ्गाणां निचयाः । तैरुपचितस्य अभिवृद्धस्य । मध्वशास्त्रमेव जलधिः तस्य पारमन्तमाप जगाम । गुरुं निमित्तीकृत्य स्वबुद्ध्यैव कृत्स्नं मध्वशास्त्रमधिगतवानिति भावः ।

ಮಧ್ವಶಾಸ್ತ್ರವು ಒಂದು ದೊಡ್ಡಸಾಗರ. ಇದರಲ್ಲಿ ವಿಷ್ಣುವಿನ ವೈಭವವೆಂಬ ರತ್ನಗಳ ರಾಶಿಗಳು ಅಡಗಿವೆ. ಇದು ತರ್ಕತರಂಗಗಳಿಂದ ಉಬ್ಬರಗೊಂಡಿದೆ. ಪರಮಾರ್ಥತತ್ವಜ್ಞಾನಿಗಳಾದ ರಘುನಾಥಾಚಾರ್ಯರು ಗುರುಗಳ ಉಪಸ್ಥಿತಿ–ಯಲ್ಲಿ ಇಂತಹ ಮಧ್ವಶಾಸ್ತ್ರದ ದಂಡೆಯನ್ನು ಬುದ್ಧಿನೌಕೆಯಿಂದ ತಲುಪಿದರು.

**साङ्ख्यपाशुपतशाक्तिकमिथ्यावाददुर्मतनिबन्धनजालम् ।**
**दूषणीयमिति शीलयते स्म प्रौढधीः स रघुनाथबुधार्यः ।।९।।**

**साङ्ख्येति** । प्रौढधीः स रघुनाथबुधार्यः साङ्ख्यपाशुपतशाक्तिकमिथ्या वादरूपाणि यानि दुर्मतानि तेषां निबन्धनानाम् ग्रन्थानां जालं दूषणीयमितिहेतोः शीलयते स्म परिशीलितवान् । न तु तत्त्वदृष्ट्येति भावः ।

ಪ್ರೌಢಬುದ್ಧಿಗಳಾದ ರಘುನಾಥಾಚಾರ್ಯರು ಸಾಂಖ್ಯ, ಪಾಶುಪತ, ಶಾಕ್ತ, ಮಾಯಾವಾದ ಮುಂತಾದ ದುರ್ಮತಗಳ ಗ್ರಂಥಗಳ ಸಮೂಹವನ್ನು ದೂಷಿಸಲು ಪರಿಶೀಲಿಸಿದರು.

**भारतीकरजवल्गितवीणामाधुरीसहचरीं रसिकाग्र्यः ।**
**साहितीमधिजगाम स धाम्ना सा हि रञ्जयति लोकमशोकम्।।१०।।**

**भारतीति** । रसिकाग्र्यः स रघुनाथार्यः । भारत्याः सरस्वत्याः करजैः नखरैः वल्गितायाः आस्फालितायाः वीणायाः माधुर्या मधुरिम्णा सहचरीं सदृशीमित्यर्थः । साहितीं साहित्यविद्याम् । धाम्ना स्वप्रभावेन अधिजगाम । न तु गुरुमुखेनेत्यर्थः । साहित्याभ्यासे हेतुमाह । **सा हीति** । हि यस्मात् कारणात् सा साहिती लोकं जनं अशोकं शोकरहितं यथा भवति तथा । रञ्जयति सन्तोषयति अतो अभ्यस्तवानित्यर्थः।

ರಘುನಾಥಾಚಾರ್ಯರು, ಸರಸ್ವತಿಯು ತನ್ನ ಉಗುರುಗಳಿಂದ ನುಡಿಸಿದ ವೀಣೆಯ ಮಾಧುರ್ಯವನ್ನು ಹೋಲುವ ಸಾಹಿತ್ಯವನ್ನು, ಸ್ವಯಂ ಅಧ್ಯಯನ ಮಾಡಿದರು. ಏಕೆಂದರೆ ಆಯಾಸವಿಲ್ಲದೇ ರಂಜಿಸಲು ಈ ಸಾಹಿತ್ಯದಿಂದ ಮಾತ್ರ ಸಾಧ್ಯ.

**इत्थमेत्य स कलास्सकलास्ताश्चन्द्रमा इव बभूव च पूर्णः ।**
**हर्षमाणकविपण्डितसंघश्लाघनाब्धिपरिवृद्धिकरश्च ।।११।।**

**इत्थमिति** । स रघुनाथार्यः इत्थं सकलाः कला विद्याः । अन्यत्र षोडशभागान् । एत्य लब्ध्वा चन्द्रमा इव पूर्णश्च बभूव । सः कलासम्बन्धेन चन्द्रस्य पूर्णत्ववत् सकलविद्यासम्बन्धेन पूर्णो निरतिशयोऽभूदिति भावः । हर्षमाणानां कविपण्डितसङ्घानां श्लाघना आत्मोत्कर्षकथनमेवाब्धिः तस्य परिवृद्धिकरश्च बभूव। पूर्णश्चन्द्रोऽब्धेः परिवृद्धिकरः। तद्वदयं बुधप्रशंसाम्बुधेः वृद्धिहेतुश्चाभूदिति भावः ।

ಈ ರೀತಿ ರಘುನಾಥಾಚಾರ್ಯರು ಎಲ್ಲಾ ವಿದ್ಯೆಗಳಿಂದ ಪೂರ್ಣರಾಗಿ, ಚಂದ್ರನಂತೆ, ಸಂತುಷ್ಟರಾದ ಪಂಡಿತರು, ಕವಿಗಳು, ಮುಂತಾದವರ ಸಂಘಗಳು ಮಾಡುವ ಶ್ಲಾಘನವೆಂಬ ಸಾಗರವನ್ನು ವೃದ್ಧಿಗೊಳಿಸಿದರು.

**तूर्णमेव पुरुषोत्तमवर्यः पूर्णविद्यमुपलभ्य तनूजम् ।**
**चीर्णपुण्यविभवं निजमेवोदीर्णमन्वयममंस्त जगत्याम् ।।१२।।**

**तूर्णमिति** । पुरुषोत्तमवर्यः तूर्णमेव पूर्णविद्यं तनूजं पुत्रं उपलभ्य । चीर्णः आचरितः पुण्यानां विभवः उत्कर्षो यस्य तम् । निजं स्वीयमेव अन्वयं वंशं जगत्यां उदीर्णं उदारं सर्वोत्तमं अमंस्त मेने ।

ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಸ್ವಲ್ಪ ಸಮಯದಲ್ಲಿಯೇ ಸಂಪೂರ್ಣವಾಗಿ ವಿದ್ಯೆಗಳನ್ನು ಕಲಿತ ಮಗನನ್ನು ಹೊಂದಿ, ಪುಣ್ಯವೈಭವವನ್ನು ಹೊಂದಿದ ತಮ್ಮ ಕುಲವು ಜಗತ್ತಿನಲ್ಲಿಯೇ ಶ್ರೇಷ್ಠವೆಂದು ತಿಳಿದರು.

**विद्ययेव तनयं विनयाढ्यं कान्तयापि किल योजयितुं सः ।**
**कांक्षति स्म पुरुषोत्तमसूरिश्श्लाघनीयगुणया स्वगृहिण्या ।।१३।।**

**विद्येति** । स पुरुषोत्तमसूरिः श्लाघनीयगुणया स्वस्य गृहिण्या भार्यया सत्याख्यया सह विनयाढ्यं तनयं विद्ययेव कान्तया स्त्रिया योजयितुं काङ्क्षति स्म । इयेष किल । विद्याध्ययनानन्तरं पुत्रस्य विवाहं कर्तुं ऐच्छदिति भावः ।

ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಯೋಗ್ಯಗುಣವತಿಯಾದ ತಮ್ಮ ಮಡದಿ ಸತ್ಯಾದೇವಿಯಿಂದ ಕೂಡಿಕೊಂಡು, ವಿನೀತನಾದ ತಮ್ಮ ಮಗನಿಗೆ ವಿದ್ಯೆ- ಯಂತೆ ಹೆಂಡತಿಯನ್ನೂ ಗ್ರಹಣಮಾಡಿಸಲು ಇಚ್ಛಿಸುತ್ತಿದ್ದರು. ಮದುವೆ ಮಾಡಲು ಬಯಸಿದರು.

**आत्मजं पुरुषरत्नमुदारं काञ्चनप्रतिमया नववध्वा।**
**योजयन्स निजबन्धुजनेषु श्लाघिताममृगयत् किल कन्याम्।।१४।।**

**आत्मजमिति** । स पुरुषोत्तमाचार्यः उदारं आत्मजं पुत्ररूपं पुरुषरत्नं काञ्चनस्य सुवर्णस्य प्रतिमया तुल्यया नववध्वा कन्यया योजयन् घटयन् घटयिष्यन् इत्यर्थः।निजबन्धुजनेषु श्लाघितां कन्यां अमृगयत् अविचारयत्। किलेति संभावनायाम् । मृग विचार इति चौरादिकः । वर्तमान सामीप्ये वर्तमानवद्वेति शतृप्रत्ययः । रत्नं काञ्चनसम्बन्धेनैव शोभत इति भावः ।

ಬಂಗಾರ ಮೈಬಣ್ಣದ ನವವಧೂವಿನೊಡನೆ ಪುರುಷರತ್ನನಾದ, ಮಗನಾದ ರಘುನಾಥಾಚಾರ್ಯನ ವಿವಾಹಮಾಡಲು ತಮ್ಮ ಬಂಧುಜನರಲ್ಲಿ ಯೋಗ್ಯ- ಳಾದ ಕನ್ಯೆಯನ್ನು ಹುಡಿಕಿದರು. ರತ್ನವು ಬಂಗಾರದೊಂದಿಗೆ ಶೋಭಿಸುತ್ತದೆ.

**आत्मजस्य सदृशीं बहुमान्यां रत्नमद्भुतमिवोद्यदवन्याम् ।**
**रूपशीलविभवेन स धन्यां निश्चिकाय निजबान्धवकन्याम्।।१५।।**

**आत्मजस्येति** । स पुरुषोत्तमार्यः । अवन्यां भूमावुद्यत् उद्गतं रत्नमिव स्थितामित्यर्थः । रूपस्य सौन्दर्यस्य वृत्तस्य विभवेन प्रभावेन बहुमान्यां बहुमानार्हाम् । अत एव धन्यां निजबान्धवस्य रघुवर्याख्यस्य कन्यां पुत्रीं आत्मजस्य पुत्रस्य सदृशीं योग्यां विवाहार्हामित्यर्थः । निश्चिकाय निश्चितवान् ।

ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಭೂಮಿಯಲ್ಲಿ ಅದ್ಭುತರತ್ನದಂತಿರುವ ರೂಪವತೀ ಸೌಂದರ್ಯವತೀ, ಶೀಲವತಿ, ಎಂದು ಮಾನ್ಯಳಾದ ಧನ್ಯಳಾದ ತಮ್ಮ ಬಂಧುಗಳ (ರಘುವರ್ಯಾಚಾರ್ಯರ) ಮಗಳಾದ, ತಮ್ಮ ಮಗನಿಗೆ ಸದೃಶಳಾದ, ವಿವಾಹಕ್ಕೆ ಯೋಗ್ಯಳಾದ, ಕನ್ನಿಕೆಯನ್ನು ತಮ್ಮ ಮಗನೊಂದಿಗೆ ವಿವಾಹಮಾಡುವದಾಗಿ ನಿಶ್ಚಯಿಸಿದರು.

**और्वगोत्रतिलको रघुवर्यस्स्वां सुतां गुणगणोज्वलभूषाम् ।**
**दित्सुरेव रघुनाथवरायामण्डयत् कुलमिव स्वमगारम् ।।१६।।**

**और्वेति** । और्वगोत्रस्य तिलकः अलङ्कारः रघुवर्यः । गुणगणा एव उज्वला भूषाः भूषणानि यस्या सा तथोक्ता ताम् । स्वां सुताम् । रघुनाथरूपवराय । दित्सुः दातुमिच्छुरेव सन् स्वं कुलमिव स्वं अगारं अमण्डयत् अलङ्कृतवान् । मडि भूषायां इति चौरादिकात् हेतुमण्णिचि लङ् । गृहमिव कुलमप्यलङ्कृतवानिति भावः ।

ಔರ್ವಗೋತ್ರಕ್ಕೆ ಅಲಂಕಾರದಂತಿರುವ ರಘುವರ್ಯಾಚಾರ್ಯರು ಸದ್ಗುಣಗಳೇ ಭೂಷಣವಾಗಿವುಳ್ಳ ತಮ್ಮ ಮಗಳನ್ನು ರಘುನಾಥಾಚಾರ್ಯರಿಗೇ ಕೊಡಬೇಕೆಂದು ಇಚ್ಛೆಯುಳ್ಳವರಾಗಿಯೇ ತಮ್ಮ ವಂಶದಂತೆ ಮನೆಯನ್ನೂ ಅಲಂಕರಿಸಿದರು.

**चित्रदर्शितविचित्रितलेखा यत्र भित्तिषु बभुर्भवनानाम् ।**
**पाणिपीडनमहोत्सवलीलालोकनाय मिलिता इव लेखाः ।।१७।।**

तद्गृहं चतुर्भिः वर्णयति । **चित्रेति** । यत्र यस्मिन् [1]नगरे भवनानां अन्तर्गृहाणां भित्तिषु कुड्येषु चित्रेषु आलेख्येषु दर्शिताः विचित्रिताः नानावर्णाः लेखाः लिखितसंस्थाविशेषाः । पाणिपीडनं विवाह एव महोत्सवः तस्य लीलानां विभ्रमाणां आलोकनाय मिलिताः सङ्गताः लेखाः देवा इव । "आदितेयादि विषदो लेखा अदितिनन्दना"इत्यमरः । बभुः रेजुः ।

१. गृहे इति भाति ।

ರಘುವರ್ಯಾಚಾರ್ಯರ ಮನೆಯ ಒಳಗಡೆ, ಗೋಡೆಗಳ ಮೇಲೆ ಅನೇಕ ಚಿತ್ರಗಳನ್ನು ಬರೆದಿದ್ದರು. ಆ ಚಿತ್ರಗಳು ವಿವಾಹ ಮಹೋತ್ಸವವನ್ನು ನೋಡಲು ಬಂದ ದೇವತೆಗಳಂತೆ ಕಾಣುತ್ತಿದ್ದವು.

**रत्नकाञ्चनमयीषु गृहाणां स्तम्भपङ्क्तिषु वधूप्रतिबिम्बाः ।**
**रेजिरे तदवलोकनलज्जालीनदेववनिता इव यस्मिन् ।।१८।।**

**रत्नेति** । यस्मिन् रत्नकाञ्चनमयीषु गृहणां स्तम्भपङ्क्तिषु । वध्वाः प्रतिबिम्बाः । तस्याः वध्वाः अवलोकनेन या लज्जा तया लीनाः विलीनाः देववनिता इव रेजिरे ।

ಆ ಮನೆಯಲ್ಲಿ ಅಲ್ಲಲ್ಲಿ ರತ್ನದ ಕಂಬಗಳು ಬಂಗಾರದ ಕಂಬಗಳು ಇದ್ದವು. ಅವುಗಳಲ್ಲಿ ವಧೂವಿನ ಪ್ರತಿಬಿಂಬಗಳು ಮೂಡಿದ್ದವು. ಅವು ವಧೂವನ್ನು ನೋಡಿ ನಾಚಿಕೆಯಿಂದ ಕಣ್ಮರೆಯಾದ ದೇವವನಿತೆಯರಂತೆ ಕಾಣುತ್ತಿದ್ದವು.

**चित्रिताम्बरचयैरुपरिष्टात् दामभिर्मणिमयैश्च विचित्रैः ।**
**यत्र भासुरमदीपि वितानं व्योमरङ्गमिव देवविमानैः ।।१९।।**

**चित्रेति** । यत्र चित्रितैः सञ्जातचित्रैः । "तदस्य सञ्जातं तारकादिभ्य इतजिति"(५.२.३५)इत च् । अम्बराणां वस्त्राणां चयैः। विचित्रैरद्भुतैः। मणिमयैः दामभिः मालाभिर्भासुरं उपरिष्टात् ऊर्ध्वदेशे वितानं उल्लोचः । "अस्त्री वितानमुल्लोच"इत्यमरः । देवविमानैः विवाहदर्शनागतदेवविमानैः इत्यर्थः । व्योमरङ्गमिवेत्युत्प्रेक्षा । अदीपि दीप्तं बभूव । दीपेः कर्तरि-लुङ् दीपजनेत्यादिना(३.१.६१)च्लेश्चिण् ।

ಆ ವಿವಾಹ ಮಂಟಪದ ಮೇಲ್ಭಾಗದಲ್ಲಿ ಅನೇಕ ಚಿತ್ರಗಳನ್ನು ಬರೆದ ಅನೇಕವರ್ಣದ (ಬಟ್ಟೆಗಳನ್ನು) ವಿತಾನಗಳನ್ನು ಕಟ್ಟಿದ್ದರು. ಆ ವಿತಾನವು ಅನೇಕ ಮಣಿಗಳಿಂದ, ಹಾರಗಳಿಂದ ಶೋಭಿಸುತ್ತಿತ್ತು. ನೋಡುಗರಿಗೆ ಅದು ವಿವಾಹವನ್ನು ನೋಡಬಂದ ದೇವತೆಗಳ ವಿಮಾನಗಳಂತೆ ಉದ್ದೀಪ್ತವಾಗಿದ್ದಿತು.

**यत्र भास्वदभितो बहुरम्भाविभ्रमैस्सुमनसाञ्च विलासैः ।**
**देवधाम विहसद्विबभासे मण्टपं रचितकौतुकवेदि ।।२०।।**

**यत्रेति** । यत्र बह्वीनां रम्भाणां कदलीनां विभ्रमैः विलासैः अन्यत्र रम्भायाः अप्सरोविशेषस्य विभ्रमैः । सुमनसां पुष्पाणाम् । "स्त्रियः सुमनसः पुष्पमि"त्यमरः । अन्यत्र देवानाम् । "सुपर्वाणः

सुमनसः"इत्यमरः । विलासैश्च प्रकाशैश्च अभितो भास्वत् । अत एव देवधाम स्वर्गं विहसत् उपहसत् । तस्यैकरम्भात्वात् इति भावः । रचिता कौतुकस्य शोभनस्य वेदिर्यस्मिन् तत् । विबभासे विभासितमभूत् ।

ವಿವಾಹವೇದಿಕೆಯಿಂದ ಕೂಡಿದ ಆ ಮಂಟಪವು ಸ್ವರ್ಗಲೋಕವನ್ನು ಅಪಹಾಸ ಮಾಡುತ್ತಿತ್ತು. ಏಕೆಂದರೆ ಸ್ವರ್ಗದಲ್ಲಿ ರಂಭೆ, ಸುಮನಸರು (ದೇವತೆಗಳು) ಪ್ರಕಾಶಿಸುತ್ತಾರೆ. ಆದರೆ ಈ ಮಂಟಪವು ಅನೇಕ ರಂಭಾ(ಬಾಳೇ) ಗಿಡಗಳ ವಿಭ್ರಮ, ಮತ್ತು ಸುಮನಸಗಳ(ಹೂವುಗಳ) ಪ್ರಕಾಶಗಳಿಂದಲೂ ಎಲ್ಲ ಕಡೆ ಶೋಭಿಸುತ್ತಾ, ಸ್ವರ್ಗವನ್ನು ಅಪಹಾಸ ಮಾಡುತ್ತದೆ. ಇಲ್ಲಿ ರಂಭಾ, ಹಾಗೂ ಸುಮನಸ್ ಪದಗಳಿಗೆ ಎರಡು ಅರ್ಥಗಳು ಇವೆ. ಕವಿಗಳು ಅದರ ಲಾಭ ಪಡೆದುಕೊಂಡಿದ್ದಾರೆ.

**तत्र सद्मनि विवाहविधिज्ञान् विश्रुतान् क्षितिसुरान् सपुरंध्रीन् ।**
**भोजनैर्वसनकाञ्चनमुख्यैः प्रीणयन् स विबुधः प्रयतोऽभूत्।।२१।।**

**तत्रेति** । स विबुधो रघुवर्यः । तत्र तादृग्गुणे सद्मनि गृहे विवाहविधिज्ञान् विश्रुतान् पुरन्ध्रीभिः कुटुम्बिनीभिः सहितान् क्षितिसुरान् ब्राह्मणान् वसनकाञ्चनमुख्यैः भोजनैः प्रीणयन् प्रयतो वरागमन प्रतीक्षानियतोऽभूदित्यर्थः

ರಘುವರ್ಯಾಚಾರ್ಯರು (ಕನ್ಯಾದಾತಾ) ತಮ್ಮ ಮನೆಯಲ್ಲಿ ವಿವಾಹ–ವಿಧಿಯನ್ನು ತಿಳಿದ ವಿಶ್ರುತರಾದ, ತಮ್ಮ ಧರ್ಮಪತ್ನಿಯರಿಂದ ಸಹಿತರಾದ ಬ್ರಾಹ್ಮಣರನ್ನು ಬಂಗಾರ, ವಸ್ತ್ರ, ಭೋಜನಗಳಿಂದ ಸಂತೋಷಗೊಳಿಸಿ ವರನ ಆಗಮನವನ್ನು ಪ್ರತೀಕ್ಷಿಸಿದರು.

**कालविभ्रमहतेषु तदानीं निस्पृहस्य विषयेषु सुतस्य ।**
**पाणिपीडनविधिं स कथञ्चित् स्वैश्चकार पुरुषोत्तमवर्यः ।।२२।।**

**कालेति** । तदानीं तस्मिन् काले स्वबन्धुभिः सह पुरुषोत्तमवर्यः कालस्य विभ्रमेण विलासेन परिवर्तनेन वा हतेषु नश्वरेषु । विषयेषु स्रक्चन्दनवनितादिषु निःस्पृहस्य सुतस्य रघुनाथार्यस्य पाणिपीडनविधिं विवाहविधानं कथञ्चित् सान्त्वनेन निर्बन्धेन च चकार ।

ಆಗ ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಕಾಲಗತಿಯಿಂದ ವಿನಾಶಹೊಂದುವ ವಿಷಯಗಳಲ್ಲಿ (ವನಿತಾದಿಗಳಲ್ಲಿ) ವಿರಕ್ತರಾದ ರಘುನಾಥಾಚಾರ್ಯರಿಗೆ ಸಾಂತ್ವನ ಹಾಗೂ ನಿರ್ಬಂಧದಿಂದ ವಿವಾಹವನ್ನು ಮಾಡಿಸಿದರು.

**स्नातकव्रतमथ स्वनिकेते प्रागकारयत तेन सुतेन ।**
**भावितीर्थगमनस्य तदानीं प्रक्रमं विरचयन्निव विप्रः ।।२३।।**

**स्नातकेति** । अथ विप्रः पुरुषोत्तमार्यः स्वस्य निकेते गृहे भाविनः भविष्यतः तीर्थगमनस्य तदानीं प्रक्रमं उपक्रमं विरचयन् इव तेन रघुनाथनाम्ना सुतेन स्नातकव्रतं प्राक् विवाहात् पूर्वं अकारयत कारितवान्।

ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ವಿವಾಹ ಪೂರ್ವದಲ್ಲಿ ತಮ್ಮ ಮನೆಯಲ್ಲಿ ರಘುನಾಥಾಚಾರ್ಯರಿಗೆ ಸ್ನಾತಕವ್ರತವನ್ನು ಮಾಡಿಸಿದರು. ಅದು ರಘುನಾಥಾಚಾರ್ಯರು ಮುಂದೆಹೋಗುವ ತೀರ್ಥಯಾತ್ರೆಗೆ ಉಪಕ್ರಮದಂತೆ ಇತ್ತು.

**ब्रह्मघोषसहितो रघुनाथः कन्यकोज्ज्वलमगारमगात् सः ।**
**भृङ्गशाव इव चारुतटाकं पद्मिनीविलसितं सनिनादः ।।२४।।**

**ब्रह्मेति** । ब्रह्मघोषैः स्वस्तिवाचनरूपवेदघोषैः सहितः रघुनाथो वरः सनिनादः सझेङ्कारः भृङ्गशावः भ्रमरशिशुः पद्मिन्या कमलिन्या विलसितं चारुतटाकं सर इव कन्यकोज्ज्वलमगारं कन्यासम्बन्धिगृहं अगात् प्राप्तवान् ।

ಸ್ವಸ್ತಿವಾಚನರೂಪ ವೇದಘೋಷದಿಂದ ಸಹಿತರಾದ ವರಶ್ರೇಷ್ಠರಾದ ರಘುನಾಥಾಚಾರ್ಯರು ಝೇಂಕಾರಮಾಡುವ ಭ್ರಮರಶಿಶುವು ಕಮಲಗಳುಳ್ಳ ಸರೋವರವನ್ನು ಕುರಿತು ಹೋಗವಂತೆ ಕನ್ಯೆಯ ಮನೆಯನ್ನು ಸೇರಿದರು.

**तत्र भूषणविभूषणगात्रीं पुत्रिकां स रघुनाथवराय ।**
**प्रत्यपादयत पावकमिद्धं तर्पयंश्च हविषाऽज्यसमिद्भिः ।।२५।।**

**तत्रेति** । तत्र सम्बन्धिगृहे स रघुवर्यः इद्धं दीप्तं पावकं हविषा आज्यसमिद्भिश्च तर्पयन् प्रीणयन् भूषणानां विभूषणानि गात्राणि अङ्गानि यस्याः तां पुत्रिकां रघुनाथनाम्ने वराय प्रत्यपादयत प्रतिपादितवान् ।

ರಘುವರ್ಯಾಚಾರ್ಯರು ಆಗ ದೀಪ್ತವಾದ ಅಗ್ನಿಯನ್ನು ಹವಿಸ್ಸು ತುಪ್ಪ ಸಮಿಧೆಗಳಿಂದ ಸಂತೋಷಗೊಳಿಸಿ, ಆಭರಣಗಳಿಗೆ ಆಭರಣದಂತಿರವ ಅಂಗಗಳುಳ್ಳ ತಮ್ಮ ಮಗಳನ್ನು ರಘುನಾಥಾಚಾರ್ಯರಿಗೆ ಕೊಟ್ಟು ವಿವಾಹ ಮಾಡಿದರು.

**तामवाप्य स विरक्तिसपत्नीं भासुरामपि मुदं न जगाम ।**
**उज्ज्वलामुपरतेःप्रतिपक्षां प्राप्य राज्यपदवीमिव योगी ।।२६।।**

सुमनसः"इत्यमरः । विलासैश्च प्रकाशैश्च अभितो भास्वत् । अत एव देवधाम स्वर्गं विहसत् उपहसत् । तस्यैकरम्भात्वात् इति भावः । रचिता कौतुकस्य शोभनस्य वेदिर्यस्मिन् तत् । विबभासे विभासितमभूत् ।

ವಿವಾಹವೇದಿಕೆಯಿಂದ ಕೂಡಿದ ಆ ಮಂಟಪವು ಸ್ವರ್ಗಲೋಕವನ್ನು ಅಪಹಾಸ ಮಾಡುತ್ತಿತ್ತು. ಏಕೆಂದರೆ ಸ್ವರ್ಗದಲ್ಲಿ ರಂಭೆ, ಸುಮನಸರು (ದೇವತೆಗಳು) ಪ್ರಕಾಶಿಸುತ್ತಾರೆ. ಆದರೆ ಈ ಮಂಟಪವು ಅನೇಕ ರಂಭಾ(ಬಾಳೇ) ಗಿಡಗಳ ವಿಭ್ರಮ, ಮತ್ತು ಸುಮನಸಗಳ(ಹೂವುಗಳ) ಪ್ರಕಾಶಗಳಿಂದಲೂ ಎಲ್ಲ ಕಡೆ ಶೋಭಿಸುತ್ತಾ, ಸ್ವರ್ಗವನ್ನು ಅಪಹಾಸ ಮಾಡುತ್ತದೆ. ಇಲ್ಲಿ ರಂಭಾ, ಹಾಗೂ ಸುಮನಸ್ ಪದಗಳಿಗೆ ಎರಡು ಅರ್ಥಗಳು ಇವೆ. ಕವಿಗಳು ಅದರ ಲಾಭ ಪಡೆದುಕೊಂಡಿದ್ದಾರೆ.

**तत्र सद्मनि विवाहविधिज्ञान् विश्रुतान् क्षितिसुरान् सपुरंध्रीन् ।**
**भोजनैर्वसनकाञ्चनमुख्यैः प्रीणयन् स विबुधः प्रयतोऽभूत् ।।२१।।**

**तत्रेति** । स विबुधो रघुवर्यः । तत्र तादृग्गुणे सद्मनि गृहे विवाहविधिज्ञान् विश्रुतान् पुरन्ध्रीभिः कुटुम्बिनीभिः सहितान् क्षितिसुरान् ब्राह्मणान् वसनकाञ्चनमुख्यैः भोजनैः प्रीणयन् प्रयतो वरागमन प्रतीक्षानियतोऽभूदित्यर्थः

ರಘುವರ್ಯಾಚಾರ್ಯರು (ಕನ್ಯಾದಾತಾ) ತಮ್ಮ ಮನೆಯಲ್ಲಿ ವಿವಾಹ-ವಿಧಿಯನ್ನು ತಿಳಿದ ವಿಶ್ರುತರಾದ, ತಮ್ಮ ಧರ್ಮಪತ್ನಿಯರಿಂದ ಸಹಿತರಾದ ಬ್ರಾಹ್ಮಣರನ್ನು ಬಂಗಾರ, ವಸ್ತ್ರ, ಭೋಜನಗಳಿಂದ ಸಂತೋಷಗೊಳಿಸಿ ವರನ ಆಗಮನವನ್ನು ಪ್ರತೀಕ್ಷಿಸಿದರು.

**कालविभ्रमहतेषु तदानीं निस्पृहस्य विषयेषु सुतस्य ।**
**पाणिपीडनविधिं स कथञ्चित् स्वैश्चकार पुरुषोत्तमवर्यः ।।२२।।**

**कालेति** । तदानीं तस्मिन् काले स्वबन्धुभिः सह पुरुषोत्तमवर्यः कालस्य विभ्रमेण विलासेन परिवर्तनेन वा हतेषु नश्वरेषु । विषयेषु स्रक्चन्दनवनितादिषु निःस्पृहस्य सुतस्य रघुनाथार्यस्य पाणिपीडनविधिं विवाहविधानं कथञ्चित् सान्त्वनेन निर्बन्धेन च चकार ।

ಆಗ ಪುರುಷೋತ್ತಮಾಚಾರ್ಯರು ಕಾಲಗತಿಯಿಂದ ವಿನಾಶಹೊಂದುವ ವಿಷಯಗಳಲ್ಲಿ (ವನಿತಾದಿಗಳಲ್ಲಿ) ವಿರಕ್ತರಾದ ರಘುನಾಥಾಚಾರ್ಯರಿಗೆ ಸಾಂತ್ವನ ಹಾಗೂ ನಿರ್ಬಂಧದಿಂದ ವಿವಾಹವನ್ನು ಮಾಡಿಸಿದರು.

